सर्पिष्पिबति । सपि ≍ पिबति । सपि पिबति ॥ धनुष्खण्डयति । धनु + खण्डयति । धनु खण्डयति ॥ अपदाद्यायामिति किं । निष्टुत् सर्पि पिब स्वसु दश । निष्टु धनु गण्डय काष्ठम् ॥ अय कार । यश काम । अय कस । अय कुशा । अय कर्णी । पय कुम्भ । पय पात्रम् । इति स्थिते । ' समासेऽसमस्तस्य ।१।१।१७३। " इत्यधिकृत्य ॥

८९ कृकमिकसकुशाकर्णीकुम्भपात्रेऽतोऽनव्ययस्य । १।१।१७५। पूर्वेणासमस्तस्यानव्ययस्याकारात्परस्य विसर्जनीयस्य सिर्भवति करोत्यादौ परे समासे ॥ अयस्कार । यशस्काम । अयस्कस । अयस्कुशा । अयस्कर्णी । पयस्कुम्भ । पयस्पात्रम् ॥ अनव्ययस्येति किं स्व + काम । स्व ≍ पात्रम् ॥ असमस्तस्येति किं परमयश काम ॥ यश काम्यति । गी पाशा इति स्थिते ॥

९० प्रत्यये ।१।१।१७६। अनव्ययस्य विसर्जनीयस्य सिर्भवति कुपौ प्रत्यये परे ॥ यशस्काम्यति । गीष्पाशा ॥ गी काम्यति । अह काम्यति इति स्थिते ॥

९१ न रह्वः काम्ये ।१।१।१७७। रेफान्तस्याहन्शब्दस्य च विसर्जनीयस्य सिर्न भवति काम्यप्रत्यये परे ॥ गी + काम्यति । अह + काम्यति ॥ चतु तयम इति स्थिते ॥

९२ ह्रस्वात्सुपस्नि ।१।१।१७८। ह्रस्वात् परस्य विसर्जनीयस्य सिर्भवति सुबन्ताद्विहिते तकारादौ प्रत्यये परे ॥ शास्वसिघस्सीत्यादिना षि । ष्टुत्व च । चतुष्टयम् ॥ नि तपति इति स्थिते ॥

---

१ पूर्वेणासमस्तस्य इसुस् प्रत्ययान्तस्य सम्बन्धिना विसर्जनीयस्य स्थाने कुपावशपरे सति परे सिर्भवति ते चेत्स्थानिनिमित्तपदे एकत्र समासे भवत ॥ सर्पिष्कुण्ड सर्पिष्पानं । धनुष्खण्ड धनुष्फल । समास इति किं तिष्ठतु सर्पि पिब स्वमुदस्म। असमस्तस्येति किं? परमसर्पि × कुण्ड । इन्द्रधनु + खण्डम् ॥

२ तर । तम । तस् । तय । त्व । तल । त्र प्रत्ययास्तकारादिप्रत्यया । तान् कथय प्रयोजयतीति चिन्तामणौ ॥

**९३ निसोऽनासेवाया तपे** ।१।१।१७९। निसो विसर्जनीयस्य सिर्भवति तकारादौ तपि धातौ परे। अनासेवाया कोऽर्थ अवसानक्रियायाम् ॥ पत्वष्टुत्वे। निष्टपति ॥ अनासेवायामिति किं, निस्तपति स्वर्ण स्वर्णकार पुन पुनस्तपतीत्यर्थ ॥ क क इति स्थिते ॥

**९४ कस्कादिषु** ।१।१।१८०॥ कास्कादिषु सिर्निपात्यते कुपौ परे कस्क। कौतस्कुत। सर्पिष्कुण्डिका। भ्रातुष्पुत्र। इत्यादयो नेया ॥

॥ इति विसर्जनीयसन्धि ॥

## ॥ अथ सुबन्तसग्रहोऽभिधीयते ॥

तत्सुबन्त पुंलिङ्ग स्त्रीलिङ्ग नपुसकलिङ्ग अलिङ्ग चेति चतुर्विधम्। तत्पुन प्रत्येकमजन्त हलन्त चेति द्विधा। तत्राजन्तेषु तावदकारान्त पुंलिङ्गो धर्मशब्द सप्तसु विभक्तिषु नीयते। धर्म इति त्रि स्थिते। "अव्ययात्स्वौजस् ।२९७। " इत्यधिकृत्य ॥

**९५ एकद्विबहुषु** ।१।२।९८। एकत्वद्वित्वबहुत्वेषु विवक्षितेषु तत्सङ्ख्यावत्यर्थे वर्तमानाच्छब्दस्वरूपाद्यथासङ्ख्य सु औ जस् इत्येते प्रत्यया भवन्ति ॥ उजावितौ। उकार "सूक्त पूर्वम् ।४०८।" इति विशेषणार्थ ॥ जकारो "जस्येड् ।१४९।" इति विशेषणार्थ ॥ ते च ॥

---

१ पुन पुन करणमासेवा ॥ तकारादाविति किं? निरतपत् ॥ तपे इति श्तप्निर्देशादिह न भवति। निस्तातीप्त ॥

२ अप्राप्तस्य प्रापणार्थं प्राप्तस्य च निषेधार्थं निपातनम् ॥ सर्पिष्कुण्डिकादीनामिह गणे पाठ समासार्थ तेन परमसर्पिष्कुण्डिकेत्यादि सिद्धम् ॥ कस्कादिष्विति बहुवचनादाकृतिगणोऽयम्। तेन भास्कर इत्यादि सिद्धम् ॥

३ इयमयमिदमिति शब्दव्यवस्थाहेतुरुपदेशगम्य प्रातिपदिकधर्मो लिङ्गम् ॥ तच्च शब्दधर्म इति चेत् गुणवचनानामाश्रयतो लिङ्गोपादान न घटेत। नहि शुक्लादिशब्दानां पटादिशब्दरूपमाश्रयस्तैरनभिधानात् अथ ह्यभिधीयते तर्ह्येषां (शब्दानां) तल्लिङ्गनियमानुपपत्ते ॥ अर्थधर्मे वै तु यत्पटादिशब्दैरभिधीयते तदेव शुक्लादिशब्दैरभिधीयते इति तल्लिङ्गव्यवस्थोपपद्यत इति अर्थधर्मत्वमस्याश्रीयते ॥ धातुविभक्तिवर्जमर्थवल्लिङ्गमिति कौमारे ॥

क्रियायोगो द्रष्टव्य ॥ कर्मादिविवक्षायां "ह्यधिकृ्समयेत्यधिकृत्य ।३४५।,,

**१०३ कर्मणि** ।१।२।१०५। क्रियाविषय कर्म। तस्मिन्नेकत्वादिसङ्ख्येऽप्रधानार्थे वर्तमानाच्छब्दात् अम् औट् शस् इत्येते प्रत्यया क्रमेण भवन्ति ॥ यस्मिन्कारके धातुप्रत्यया भवन्ति तत्प्रधानम्। अन्यदप्रधानम्। टशावितौ टकार सुट्प्रत्याहारार्थे। शकार शस्यगिति विशेषणार्थे ॥ अमि 'म्यत्वा' इत्याकारे प्राप्ते ॥

**१०४ मोऽणोऽम** ।१।२।३६। अण परस्य अम औदेर्मकारो भवति ॥ "सयोगस्यादिस्कोर्लुक् ।२५०।' इत्यधिकृत्य ॥

**१०५ पदस्य** ।१।२।९२। हलोऽनन्तरास्सयोग। तदन्तस्य पदस्य लुम्भवति ॥ इति पदस्य सर्वस्य लुक्प्राप्तौ ॥

**१०६ षष्ठ्याः स्यानेऽन्त्येऽल** ।१।१।४७। षष्ठ्यन्तस्य विधि तस्यान्ते अल स्थाने भवति ॥ औश्चैन्। शसि 'ऋत्यक' दीर्घ ॥ 'शम्यक्।१८१।' इत्यधिकृत्य ॥

**१०७ नन्तः पुसः** ।१।१।७९। पुल्लिङ्गस्याक साचो नान्तो दीर्घो भवति शसि परे ॥ आमन इत्यान् सस्य पदस्येति लुक्। धर्म। धर्मो। धर्मान्। चिनोतीत्यादिक्रियासम्बन्धो वेदितव्य ॥ करणादिविवक्षाया। "टा भ्या भिम्सिद्धो ।३६०।" इत्यधिकृत्य ॥

**१०८ हेतुकर्तृकरणेत्थम्भूतलक्षणे** ।१।२।१२८। एकत्वादिसङ्ख्येऽप्रधाने हेत्वाद्यर्थे वर्तमानाच्छब्दात् टा भ्या भिम् इत्येते प्रत्यया क्रमेण भवन्ति ॥ ट इत् "नास्तीट ।१३५।' इति विशेषणार्थे ॥

---

१ 'तस्मादादे ।५४१' इति सूत्रनियमात् भ्या आदेरेव नकारो भवति ॥

२ 'न ।२०४" इति सूत्रेण पदान्तनकारस्य लुचि प्रसक्तायां 'परे ।२२४" इति सूत्रेण पूर्वकार्यस्य नलोपस्यासत्त्वं पदान्तत्वाभावादिति वदितव्यम्॥ पदस्य।१०५' इति सूत्रेण सकारलोपा सकोत्तरकार्यस्य सम्भवात् ॥

३ अर्थविशेषविह्नितस्यम्भूतलक्षणम्। यथा- शिखया बटुमद्राक्षीत्तथा छात्रम् नूतनिम्। इत्यादौ शिखादि ॥

(-द्) याभ्यां येभ्यः । यस्य ययोः येषां । यस्मिन् ययोः येषु ॥ अदस्-शब्दात् स्यादयः । "सौ ।१३६।" इत्यधिकृत्य ॥

१२९ **औस्सुलुकादसोऽनो** ।१।२।१२। अदसोऽन्त्यस्याकारो भवति स्वसौ परे नोकारश्च सोश्च लुक् ॥

१३० **स्थानीवानलाश्रये** ।१।१।५०। यस्य स्थाने यो विधीयते स स्थानी इतर आदेशः । स्थानिवद्भवत्यादेशः स्थान्याश्रये कार्ये कर्तव्ये स्थानिकार्यं भजत इत्यर्थः । न स्थान्यल्आश्रये कार्ये ॥ इति सुलुक् स्थानिवद्भावे ॥

१३१ **दस्सः** ।१।२।२१४। अदसो दकारस्य स्थाने सो भवति स्वसौ परे ॥ ऐच् । अन्यत्र सुपि अत्वाद्युत्वे ॥

१३२ **दो मोऽस्यादसो माद्गुश्चापिन्यसन्** ।१।२।४४। अवर्णान्तस्यादसो दस्य मो भवति । मकाराच्च परस्यालो गुर्भवति । स च पिनाम्यामन्यस्मिन् कार्ये प्राप्ते असन् भवति ॥ इत्येचि कृते गु । ग इत् गित्कार्यार्थं । आमन इति द्विमात्रस्यौकारस्य द्विमात्र ऊकार ॥ जस् शिरेङ् मत्वं च ॥

१३३ **गी बहुत्वे** ।१।२।४६। बहुत्वे अदसो मात्परस्य एतो गी भवति अमि ॥ अत्वाद्युत्वे मत्वगुत्वे । औश्चाविशेषः । शस्यान् मत्वगुत्वे अन्तटुक । टायामपिनीति वचनात् मत्वगुत्वे ॥

१३४ **घ्यसख्यदन्द्वपत्तीदुत्** ।१।१।४०। इदुदन्त घिसंज्ञ भवति

---

१ पिश्च नाश्च पिना । न पिना अपिना । तस्मिन् अपिने । अत्र नि इति नाशब्दस्य सोमपाशब्दयन्सप्तम्येकवचनम् ॥ असदिति किं? अमुया अमूभ्याम् । अत्र अमू था इति स्थिते गुः प्राप्नोति 'टाम्येन् इति सूत्रेण एत्वं च । तत्रासत्त्वमनित्येतस्मिन्नन्तर त्वादन्तरङ्गत्वाच्च गौ कृते स्थानिवद्भावेन यदेत्वं स्यात् कृतकार्यत्वाद्गुशास्त्रस्य पुनर्गुत्वे कारश्रुतिन स्यात् । अतोऽसन्नित्याकारस्यैवेत्व ततो यादेशस्ततो गुरिति ॥ तथा अमू भ्यामित्यत्र गुत्वं प्राप्नोति 'भ्यत्या ' इति सूत्रेणात्वं च । तत्र परमत्वात्व नित्यत्वाद्बाधित्वा गौ कृते दीर्घश्रुतिर्न स्यात् । अतोऽगमित्यात्वं ततो गुरिति न्यास स्पष्टम् ॥

मखिशब्दमद्व द्वममासीय च पतिशब्द वर्नयित्वा ॥ "घेर्ङीग्नाटि ।१५५।" इत्यधिकृत्य ॥

**१३५ नास्त्रीट** ।१।२।२७। घिसं ज्ञातपरस्य ट ना इत्यादेशो भवति न स्त्रीविषयस्य ॥ भ्याम्यात्वे कृते मत्वगुत्वे । भिस अद्रश इति प्रतिषेधान्नैसु ण्त्वे गीन्व । डित सायादौ मत्वगुत्वे । पत्व च । अधिनीति वचनात् न गुत्वस्यासत्त्व । ओसेत्वे अयि च कृते मत्वगुत्वे । आम साम्येत्वे पुन षिर्गत्व च । सुपि च तथा ॥ असौ । अमू । अमी ॥ अमुम् । अमू । अमून् ॥ अमुना । अमूभ्याम् । अमीभि ॥ अमुष्मै । अमूभ्याम् । अमीभ्य ॥ अमुष्मात् (–द्)। अमूभ्याम । अमीभ्य ॥ अमुष्य । अमुयो । अमीषाम् ॥ अमुष्मिन् । अमुयो । अमीषु ॥ इदम् स्वादय ॥

**१३६ सौ** ।१।२।२०९। इदमोऽन्तस्य मो भवति स्वसौ परे ॥ अत्वापवाद ॥

**१३७ पुंसीदोऽय्** ।१।२।२१०। इदम इद्रूपस्य अय् भवति पुल्लिङ्गे ये स्वसौ परे ॥

**१३८ ईंदृङ्याद्दीर्घाल्लुक्** ।१।२।१२०। हल ङ्याङ्भ्या च दीर्घाभ्या परस्य सेर्लुग् भवति ॥ अन्यत्वात्वाल्लुचौ ॥

**१३९ दो म** ।१।२।२०८। इदमो दस्य मो भवति स्वसुपि परे ॥ शेष प्राग्वत् । टायाम् ॥

**१४० टौस्यन** ।१।२।२०७। इदम अनो भवति स्वटौसो परत ॥

---

१ अत्र पदस्यत्वनेनैव सुगेनसिद्धौ हल्ग्रहण कृत इति चेन् राजन्नित्यत्र नलोपार्थम्। अन्यथा 'पदस्य' इति पूर्वसूत्रेण लोप कृते न ।२०४ परसूत्रम् । तथाच परसूत्रेण नकारलोप कृत 'परे ।१।१।४९।' इति सूत्रेण परे कार्य कर्तव्य पूर्वमसद्भवतीति नियमेन सुलुचोऽसत्वात्पदस्येति प्राप्तेरसद्भाव । अत कारणान् हल्ग्रहण नलोपार्थम् ॥ 'न ।१।२।१ ।' इति पर । 'पदस्य ।१।२।९७।' इति पूर्वम् ॥

एद् । स्यामि । ' स्येऽश् ।१।२।२०५। ' इत्यधिकृत्य ॥

१४१ अकः ।१।२।२०६। अक्कारस्येदम अश् भवति सभयादौ स्यसुपि परे ॥ श इत् सर्वादेशार्थं । भिस अचश इति प्रतिषेधान्नेस् । हित स्यायादौ अश् । ओसन शेष प्राग्वत् ॥ अयम् । इमौ । इमे ॥ इमम् । इमौ । इमान् ॥ अनेन । आभ्याम् । एभि ॥ अस्मै । आभ्याम् । एभ्य ॥ अस्मात् ( —द् ) । आभ्याम् । एभ्य ॥ अस्य । अनयो । एषाम् ॥ अस्मिन् । अनयो । एषु ॥ अन्वादेशे द्वितीयाटौसि सुपि भेदोऽस्ति

१४२ इदम. ।१।२।२०४। अन्वादेशे इदम एनन्नादेशो भवति द्वितीयाविभक्तौ टायामोसि च परे ॥ अत्वाल्लुचौ शेष प्राग्वत् ॥ एनम् । एनौ । एनान् ॥ एनेन ॥ एनयो ॥ एनयो ॥ एतद स्यादय अत्वाल्लुचौ ॥ सौ तोऽस्थानामिति तस्य स शाम्वसीति सस्य षि रिविसर्जनीयौ । अयत्र सर्वशब्दवत् ॥ एष । एतौ । एते ॥ एतम् । एतौ । एतान् ॥ एतेन । एताभ्यान् । एतै ॥ एतस्मै । एताभ्याम् । एतेभ्य ॥ एतस्मात् (—द्) । एताभ्याम् । एतेभ्य ॥ एतस्य । एतयो । एतेषाम् ॥ एतस्मिन् । एतयो । एतेषु ॥ अन्वादेशे ॥

१४३ त्यदा द्वितीयाटौस्येनदेतद. ।१।२।२०३। अन्वादेशे एतद एनद्भवति द्वितीयाविभक्तौ टायामोसि च त्यदादिसम्बन्धिनि सुपि परे ॥ शेष प्राग्वत् । एन । एनौ । एनान् ॥ एनेन । एनयो । एनयो ।

---

१ इदम ककारभकारयकारादिके त्यदादिसम्बन्धिनि सुपि परे अन्वादेशे अशित्ययमादेशो भवति ॥ शैनिको यज्ञमध्येता । अथोऽस्मै साधु दीयतां सूत्रम् । शाक्षिकाविमत्ता वध्येतारौ । अथो आभ्या साधु दीयता सूत्रन् । वाल्कियेक दाचे । अथो अस्यै दीयता मोदक ॥ स्ये ति किं' इमे इनके । परत्वान्नत्वादि भवति । अन्वादेश विधि सुपा प्रकृति विशेष्यत इति ॥ परमेत परमेमम् । परममकस्मै इत्येनदादि न भवति ॥ शवार सर्वादेशार्थे ॥

२ कथितस्यानुकथनमन्वादेश । अनेन रात्रिरधीता अथो एनेन अहरधीतम् । इदं मदिग्दानामथाथ— इदम प्रत्यक्षगत समीपतरवात चैतदो रूपन ॥ अदमस्तु विप्रकृष्ट तदिति परोक्षे विजानीयात् ॥ १ ॥

सङ्ख्यावाचिन एकशब्दादेकवचनान्येव । एक । एकम् । एकेन । एकस्मै । एकस्मात् (–द्) । एकस्य । एकस्मिन् ॥ कतिपयवाचिनो द्विवचनबहुवचनान्यपि । एक । एकौ । एके । इत्यादि सर्वशब्दवत् ॥ द्विशब्दस्य द्वित्ववाचित्वात्ततो द्विवचनान्येव । अत्व । द्वौ । द्वौ । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयो । द्वयो ॥ किम स्वादय ॥

**१४४ किम क** ।१।२।१७। किम को भवति स्वसम्बन्धिनि सुपि ससौ च परे ॥ क । कौ । के ॥ क । कौ । कान् ॥ केन । काभ्याम् । कै ॥ कस्मै । काभ्याम् । केभ्य ॥ कस्मात् (–द्) । काभ्याम् । केभ्य ॥ कस्य । कयो । केषा ॥ कस्मिन् । कयो । केषु ॥ पूर्वशब्दात्स्वादय ॥

**१४५ नव पूर्वा वादौ** ।१।२।१७२। पूर्वान्यो नव सर्वादयो वा भवन्त्यदिरादौ स्वसुपि परे ॥ पूर्व । पूर्वौ । पूर्वे पूर्वा ॥ हे पूर्व ॥ पूर्वं । पूर्वौ । पूर्वान् ॥ पूर्वेण । पूर्वाभ्याम् । पूर्वै ॥ पूर्वस्मै । पूर्वाभ्याम् । पूर्वेभ्य ॥ पूर्वस्मात् (–द्) । पूर्वात् (–द्) । पूर्वाभ्याम् । पूर्वेभ्य ॥ पूर्वस्य । पूर्वयो । पूर्वेषा ॥ पूर्वस्मिन् । पूर्वयो । पूर्वेषु ॥ एव परावरदक्षिणोत्तरापराधरान्तरस्वशब्दा ॥ द्वितीयशब्दात्स्वादय तस्य ङेङसिङिषु भेदोऽस्ति ॥

**१४६ तीय ङिति** ।१।२।१७३। तीयप्रत्ययान्त सर्वादि वा भवति ङिति सुपि परे ॥ सर्वादित्वात् स्मायादि । द्वितीयस्मै द्वितीयाय । द्वितीयस्मात् (–द्) द्वितीयात् (–द्) । द्वितीयस्मिन् द्वितीये । अन्यत्र धर्मशब्दवत् । एव तृतीयशब्द ॥

---

१ अत्र नवग्रहणात् पूर्वा इति बहुवचनाच्च पूर्वा इत्यस्य पूर्वादय इत्यर्थो गृह्यते । नवेति किं? त्वस्मात् त्वस्मिन् । पूर्वादय इति किं? सर्व सर्वस्मात् ॥ वादौ इत्यत्र वा अदौ इति च्छेद । अत्त इत्त अदि तस्मिन् अदौ इति विग्रह । अत्र अदि इत्येकवचन नपुसकत्वं च न शङ्क्यम् । कुत ? लक्षणसूत्रे लक्षण व्यभिचारस्याचार्या ॥ पूर्वादीना सर्वादित्व प्रथममेव सिध्द तदनन्त अदिरादौ स्वसुपि विकल्प्यत इत्यर्थ ॥ आदिरादाविति किं? पूर्वस्मै पूर्वेषाम ॥ पूर्वस्या इत्यत्र नित्यत्वात्पूर्वमेव याट् भवति ॥

**१४७ नेमार्धप्रथमचरमाल्पकतिपयनयस्य वा**।१।२।१६८। नेमादीना तयट्प्रत्ययान्तस्य च जस शिर्वा भवति ॥ नेमे नेमा । अर्धे अर्धा । प्रथमे प्रथमा । चरमे चरमा । अल्पे अल्पा । कतिपये कतिपया । द्वितये द्वितया । इत्यादि ॥ आकारान्त पुलिङ्ग सोमपाशब्द । पूर्ववत्स्वादय । सुख्यविशेष । आमन्त्र्ये सौ अदन्तत्वाभावान्न ह्रस्व शसादावजादौ—

**१४८ आतोऽनाड'श्लुक्** ।१।२।१५१। अपदान्तस्यात श्लुभवति सुर्द्दच्छिण्यादिवर्जिते प्रत्यये ग्या च परत नाड ॥ सहिता । यलादौ पदत्वान्नात श्लुक् । सोमपा । सोमपौ। सोमपा ॥ हे सोमपा । हे सोमपौ। हे सोमपा ॥ सोमपा । सोमपौ । सोमप ॥ सोमपा । सोमपाभ्या । सोमपाभि ॥ सोमपे । सोमपाभ्या । सोमपाभ्य ॥ सोमप । सोमपाभ्या । सोमपाभ्य ॥ सोमप । सोमपो । सोमपा॥ सोमपि । सोमपो । सोमपासु ॥ एव क्षीरपाम्बुपादय ॥ इकारान्त पुलिङ्गो रविशब्द तत स्वादय सो रिसिसर्जनीयौ। औकारयो ॥

**१४९ इदुतो गिग्वौतोऽस्त्रे.** ।१।२।२२। इकारात्परस्य औतमुपो गिर्भवति उकारात्परस्य गु न स्त्रीशब्देकारात् ॥ ग इत् । गित इति सन्धिप्रतिषेधार्थ । दीर्घ । जसि ॥

**१५० जस्येड्** ।१।२।२३। इदुतोरेड् भवति जसि परे ॥ आमन्त्र अग् ॥ आमन्त्रणे सो ॥

---

१ व्यवस्थितविभाषाविज्ञानात्सञ्ज्ञाया न भवति । नमेति कस्यचिन्नाम अत्र विकल्पो मा भत् नमा । अत्रापि स्वसम्बन्धिनीति वर्तते तनेह न भवति प्रियनेमा । अतिनेमा इत्यादि ॥ प्रत्ययान्तग्रहणादिह न भवति अधका । आद न्ताद्विकल्पो मा भत् नेमा स्त्रिय ॥

२ ग्यसुर्द्दच्छिण्यादिप्रत्यय इति किं? द्विपादौ द्विपाद । शि व्याघ्रपान्दि कुलानि ।

३ अस्त्रेरिति किं? आतेन्त्रियौ पुरुषौ । अस्त्रेरितीदमेव ज्ञापक इयोऽपवादेन इदुत्कार्यं भवतीत्यस्य । तेन अतितिस्य ॥ यदि इदुत्कार्यात्परत्वादियादेश स्यात्तर्हि व्यर्थ प्रतिषेधोऽस्त्रेरिति । तस्मादिदमेव तु प्रतिषेधवचन ज्ञापक इयादेश पर बाधित्वा इदुत्कार्यं भवतीति ॥

१५१ ह्रस्वैतो ङुचि घोरेद् ।१।२।१२५। ह्रस्वस्य एकारस्य च अट् घिदित्यादेशा भवन्ति आमन्त्र्ये सौ परे । इको ङुगिति ङुगि च सत्यां सोऽध ङुट् ॥ आमन् । औगमो मागत । अभि मन्त्रुषी । औपमेद । शर्मन् सङ्गुक "अभिने ।११०" इति णत्वे प्राप्ते ॥

१५२ अन्तक्षुभ्नादीनाम् ।१।२।५४। पदान्तस्य क्षुभ्नादीनां च नस्य णो न भवति ॥ इति णत्वाभाव । टाया घितमान्स्रीट इति नादेश । णत्व । हयि ॥

१५३ ङचेद् ।१।२।२८। घेरेद् भवति ङस्तौ सुपि परे ॥ आतत अय् । ङसिङसोरेडि ॥

१५४ ङ्डो ङुट् ।१।२।२०५। एङ परयो ङसिङसोरतो ङुग्भवति ॥ ओसि यत्र् । आमो 'नमुङम्वाद्नाट' इति नाम् । नाम्यतिसृचतुष्व इति दीर्घ णत्व च । डौ ॥

१५५ घेङ्गौरनादि ।१।२।२६। घे परो ङिङ्गौर्भवति नादि स्त्रिये ॥ ङ इत् ॥

१५६ ङित्यन्त्याजादे' ।१।२।१०७। टिति परे पूर्वस्यान्त्याजादेर्ङुग्भवति ॥ सुपि पत्न । रवि । रवी । रवय ॥ हे रवे । हे रवी । हे रवय ॥ रविं । रवी । रवीन् ॥ रविणा । रविभ्या । रविभि ॥ रवये । रविभ्या । रविभ्य ॥ रवे । रविभ्या । रविभ्य ॥ रवे । रव्यो । रवीणा ॥ रवौ । रव्यो । रविषु ॥ एव ध्वनिमुनिकलिनलिकेलिकिमिकीनकपिरक्रिकृष्ण्यग्निप्रभृतय ॥ अतिस्त्रि-शब्दात्स्वादौ औकारयोरस्त्रेरिति निषेधान्न गि तल्लेय् ॥ अतिस्त्रि । अति-स्त्रियौ । अतिस्त्रय ॥ हे अतिस्त्रे । हे अतिस्त्रियौ । हे अतिस्त्रय ॥ अतिस्त्रियम्

---

१ क्षुभ्ना, तृप्नु (तृप्नु इत्येव पाठान् नु) आचार्यानी, आचार्यभोगीन, युवन् अहन्, पक्ष, नृप धन, रत्ननामन्, नट नन्द नगर, नृत्त नदी निवेश, अग्नि, निवास अनूप अग्निन् नन्दन गतन गहन, रदन इति क्षुभ्नादिराकृतिगण ॥

२ स्त्रियमतिक्रान्तोऽतिस्त्रि पुरुष इत्यर्थ । गतादिषु प्रादय इति समास । ह्रस्वो नपुंसके स्याद इति ह्रस्व ॥

अतिसखिम् । अतिसखियो । अतिसखिय अतिसखीन् ॥ अन्यत्र रविशब्दवत् ॥ पतिशब्दस्य टाया ङिति च विशेषोऽन्यत्र रविशब्दवत् । अघित्वात् टाया न नाभाव । ङिति नेड् यञ् । ङसि ङसो ॥

१५७ ख्यत्य उ. ।१।२।१०४। ख्य त्य इत्यनच्काभ्या परस्य ङसि ङसोरत उकारो भवति ॥ सन्निकर्ष ॥

१५८ ङिरौत् ।१।२।२४। इदुद्भ्या परो ङिरौद्भवति ॥ यञ् । पति । पती । पतय ॥ हे पते । हे पती । हे पतय ॥ पतिं । पती । पतीन् ॥ पत्या । पतिभ्या पतिभि ॥ पत्ये । पतिभ्या । पतिभ्य ॥ पत्यु । पतिभ्या । पतिभ्य ॥ पत्यु । पत्यो । पतीना ॥ पत्यौ । पत्यो । पतिषु ॥ सखिशब्दात् स्यादय । 'डाम् शसि ।१७६।" इत्यधिकृत्य ॥

१५९ ऋत्सखीदुशनस्पुरुदशोऽनेहस सो' ।१।२।११९। ऋदन्तादिदन्तात्सखिशब्दादुशनस् पुरुदशम् अनेहम् इत्येतेभ्यश्च परस्य सोर्डादेशो भवति ॥ डइत् अन्त्याजादिलुगर्थ ॥

१६० सखित ऐ च ।१।२।१३०। इदन्तस्य सखिशब्दस्य ऐकारो भवति स्यमम्सुटि परे न चैकामन्त्रणे ॥ आय् ॥

१६१ न डान्लुक् ।१।२।१२९। डा च नलुक एकामन्त्रणे न भवत हे सखे इत्येङ् सुलुक । शसीन् सलुक । टाया अघित्वान्न नाभाव । ङिति नेड् यञ् । ङसिङस्ङिषु पूर्ववत् । अन्यत्र रविशब्दवत् । सखा । सखायौ

1 स्य् त्य् इत्यनच्कग्रहणादिह न भवति मुख्यात् अपत्यात् ॥ अनच्केऽपि अत इति तकारादिह न भवति सख्या पत्या ॥

2 ङिरौदित्यभेदनयेन निर्देशोऽसन्देहार्थ । ङेरिति षष्ठीनिर्देशे ङेरिति चतुर्थ्येक वचनस्याय विधिरुत सप्तम्येकवचनस्येति सन्दिह्येत तत्संशयव्युदासार्थं ङिरौदिति निर्देश । तदाऽस्थासन्देहार्थ स्वरूपनिर्देशार्थो वा ॥

3 ऋदिति तकारो दीर्घनिवृत्त्यर्थ । सखित् इति नारी सखी पङ्गू श्वश्रू । २४१ इति ङीप्रत्ययान्तो मा भूदिति तकारग्रहणम् ॥ अयमेव हि सखिदिति तकारो ज्ञापयति प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् । एकदेशविकृतमनन्यवदिति च ॥ तेन परमसखा परमसखायौ भवति ॥ सारिति किं? उशनसौ ॥

सखाय ॥ हे सखे । हे सखायौ । हे सखाय ॥ सखाय । सखायौ । सखीन् ॥ सख्या । सखिभ्या सखिभि ॥ सख्ये । सखिभ्या । सखिभ्य । सख्यु । सखिभ्या । सखिभ्य ॥ सख्यु । सख्यो । सखीना ॥ सख्यौ । सख्यो । सखिषु ॥ त्रिशब्दस्य बह्वर्थवाचित्वात्ततो बहुवचनान्येव ॥ त्रय त्रीन् ॥ त्रिभि ॥ त्रिभ्य ॥ त्रिभ्य ॥ आमि ॥

१६२ **त्रेस्त्रय** ।१।२।३५। त्रिशब्दस्य त्रयो भवति आमि परे ॥ त्रयाणा ॥ त्रिषु ॥ कतिशब्दाज्जसादय ॥

१६३ **डतिष्णा सङ्ख्याना जश्शस** ।१।२।१५२। डत्यन्तात् षकारनकारान्ताच्च सङ्ख्यावाचिन परयो स्यमम्वधिनोर्जश्शसो लुब्भवति । अन्यत्राविशेष । कति ॥ कति ॥ कतिभि ॥ कतिभ्य ॥ कतिभ्य ॥ कतीना ॥ कतिषु ॥ एवं यतिततिशब्दौ ॥ ईकारान्तो ग्रामणीशब्द तत स्याद य सो रिविसर्जनीयौ ॥ अनादौ सुपि ॥

१६४ **प्रत्येऽसुधीण** ।१।२।४०। तिना कारकेण च समस्तस्यानेकाचश्च सुधी इण् इत्येतद्वर्जितस्य धातोरसंयोगात्परस्येवर्णस्य यत्र भवति अजादौ प्रत्यये परे ॥ इयपवाद ॥

१६५ **न्यशोदाम्** ।१।२।२५। णीञ अङ्गादवयवात् याट आट्श्च

---

१ का सङ्ख्या मानमेषा ते कति । किमश्च सङ्ख्याया डतिश्च । इति सूत्रेण डतिप्रत्यय ॥

२ या सङ्ख्या मानमेषा ते यति । सा सङ्ख्या मानमेषा ते तति ॥

३ पृथग्योगकरणादसुधीण इति प्रतिषेधाच्च इवर्णस्यैवाय विधि । यदि द्वयोरपि स्यात्तर्हि प्रत्यय इति वचन व्यर्थं स्यात् (यत्र यत्रादेशरूपो विधि स्थाननिमित्तयो द्वयोरपि स्यात्तर्हि प्रत्यये इति प्रत्ययस्य परत्ववचन व्यर्थं स्यात् इति भाव ) यद्युवर्णस्याय विधिस्तर्हि सुधीण प्रतिषेधो व्यर्थ स्यादत आह ॥ सुष्ठु ध्यायति धरति वा सुधी । अस्मादेव निपातनाद्धीभाव ॥

४ ग्रामणीरित्यत्र णीञ् प्रापणे इति धातु स्वकृतास्युक्तम् । ४८० इति सूत्रेण स्वकारकेण समस्त । तथा च ग्राम नयतीति ग्रामणीरिति विग्रह ॥ तत्र न्यशादि त्यस्य प्रवृत्ति । नीश्च अशश्च न्यशामिति द्वन्द्वैकवद्भाव तस्मात् न्यशात् । आशनमन्तरेणा शो नास्ति अशो ड प्रत्यय । तस्य अश ड याट आट् च । तथाच णीञ्धातोः पर आमश्च परो डिराम् भवतीत्यर्थ । ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिष्वित्यमर ॥

परे ङिराम्भवति॥ यन्। ग्रामणीः। ग्रामण्यौ। ग्रामण्यः॥ आमन्त्रणेऽप्येवं ग्रामण्यं। ग्रामण्यौ। ग्रामण्यः॥ ग्रामण्या। ग्रामणीभ्यां। ग्रामणीभिः॥ ग्रामण्ये। ग्रामणीभ्यां। ग्रामणीभ्यः॥ ग्रामण्यः। ग्रामणीभ्यां। ग्रामणीभ्यः॥ ग्रामण्यः। ग्रामण्योः। ग्रामण्याम्॥ ग्रामण्याम्। ग्रामण्योः। ग्रामणीषु॥ एवमग्रणीसेनानीप्रभृतयः। क्रियामप्येवं॥ विक्रीशब्दात्स्वादयः। अतत्संयोगादिति वचनात् न यन्। इय्। विक्रीः। विक्रियौ। विक्रियः॥ इत्यादि। एवं यवक्रीशब्दः॥ सुधीशब्दात् स्वाद्यः सो रिविसर्जनीयौ। अजादौ असुधीण इति निषेधान्न यन्॥

१६६ भ्रूह्रस्भ्रोश्चेयुवौ।१।२।४१। भ्रू हल् परस्य श्नोर्धातोश्चेवर्णोवर्णयोः क्रमेण इयुवौ भवतः अजादौ प्रत्यये परे॥ सुधीः। सुधियौ। सुधियः॥ आमन्त्रणेऽप्येवं। सुधियं। सुधियौ। सुधियः॥ सुधिया। सुधीभ्यां। सुधीभिः॥ सुधिये। सुधीभ्यां। सुधीभ्यः॥ सुधियः। सुधीभ्यां। सुधीभ्यः॥ सुधियः। सुधियोः। सुधियाम्।[1] सुधियि। सुधियोः। सुधीषु॥ एवं नीसुध्यादयः। आमि नामाम इति वा नाम्। सुश्रिया सुश्रीणाम्॥ उकारान्तः पुंल्लिङ्गो गुरुशब्दः ततः स्वादयः रविशब्दवत्प्रक्रिया गुर्वादि। गुरुः गुरू गुरवः। हे गुरो हे गुरू हे गुरवः। गुरुं गुरू गुरून्। गुरुणा गुरुभ्यां गुरुभिः। गुरवे गुरुभ्यां गुरुभ्यः। गुरोः गुरुभ्यां गुरुभ्यः। गुरोः गुर्वोः गुरूणां। गुरौ गुर्वोः गुरुषु॥ एवं भानुबाहुकारुमेरुसाधुप्रभृतयः॥ ऊकारान्तः पुंल्लिङ्गः खलपूशब्दः। ततः स्वादयः। सो रिविसर्जनीयौ। अजादौ॥

---

१ नीशब्दस्य सप्तम्येकवचने नियि इति सिद्धम्। न्यशादामिति सूत्रेण ङिप्रत्ययस्य आम् न भवति। कस्मादिति चेत् तत्सूत्रे न्यशादामिति पूर्वं सूत्रं भ्रूह्रस्भ्रोश्चेयुवौ इति परसूत्रम्। तथा च परे कार्ये कर्तव्ये पूर्वमसद्भवति इत्यामो निषेधो ज्ञातव्यः।

२ ध्वनिमज्जयाम्। गुरुस्तु निष्पत्तौ श्रेष्ठे गुरुः पितरि दुर्भरे॥ उपाध्यायोऽध्यापकः स्याद्याभिषकादिकृद्गुरुः॥ १॥

**१६७ धातोस्त्रिकारकसमस्तानेकाचोऽतत्संयोगाद्य्वो॰[1]** ।१।२।३८। त्रिना कारकेण च समस्तस्यानेकाचश्च धातोरतत्संयोगात्परयो र्विणावर्णयोर्यन् भवत्यजादौ सुपि परे ॥ आसन्न । खलपू । खलप्वौ । खलप्व ॥ हे खलपू । हे खलप्वौ । हे खलप्व ॥ खलप्व । खलप्वौ । खलप्व ॥ खलप्वा । खलपूभ्या । खलपूभि ॥ खलप्वे । खलपूभ्या । खलपूभ्य ॥ खलप्व । खलपूभ्या । खलपूभ्य ॥ खलप्व । खलप्वो । खलप्वा ॥ खलप्वि । खलप्वो । खलपूषु ॥ एव यवक्षारलूशाण्डलूप्रभृतय ॥ कटप्रूशब्दात्स्यादय ॥ संयोगपरत्वान्न यन् । उव् । कटप्रू कटप्रुवौ कटप्रुव ॥ स्वयम्भूश-ब्दात् स्यादय । सो रिविसर्जनीयौ ॥ अजादौ ॥

**१६८ दृन्पुन करवर्षाभिर्भुव.** ।१।२।३९। दृन् पुनर् कर वर्षा इत्येतैरेव समस्तस्य भुवो धातो उवर्णस्य यन् भवति अजादौ सुपि परे । नान्यैरिति नियमादत्र यन् न भवति । भूदलित्यादिना उव् ॥ स्वयम्भू । स्वयम्भुवौ । स्वयम्भुव ॥ आमन्त्रणेऽप्येव ॥ स्वयम्भुव । स्वयम्भुवौ । स्वयम्भुव ॥ स्वयम्भुवा । स्वयम्भूभ्या । स्वयम्भूभि ॥ स्वयम्भुवे । स्वयम्भूभ्या । स्वयम्भूभ्य ॥ स्वयम्भुव । स्वयम्भूभ्या । स्वयम्भूभ्य ॥ स्वयम्भुव । स्वयम्भुवो । स्वयम्भुवा ॥ स्वयम्भुवि । स्वयम्भुवो । स्वयम्भूषु ॥ एव

---

१ क्रियार्थो धातुस्तस्य ॥ डाच्यूर्यत्यादिसूत्रविहित सञ्ज्ञारूपास्ति । क्रियानिवर्तक कारक स्मृति । त्रिश्च कारक च त्रिकारके त्रिकारकाभ्यां समस्तस्त्रिकारकसमस्त । समस्त इति प्रत्येक संबध्यते तेन त्रिसमस्त कारकसमस्त इति । अनकोऽच् अनुप्र त्याहारगृहीतवर्णो यस्य सोऽनकाच । त्रिकारकसमस्तश्चानेकाचेति द्वन्द्व । तस्य धातोरिति विशेष्य प्रतिव्यक्ति सम्बध्यते तत त्रिसमस्तस्य धातो कारकसमस्तस्य धातोरनेकाचश्च धातोरिति । तस्य धातो संयोगस्तत्संयोग । न विद्यते तत्संयोगो यस्य सोऽतत्संयोग स्तस्मात् । इ उ उश्च यु तस्य यो । इति सूत्र व्युत्पत्ति । त्रिकारकेति किं? लुवौ लुव । परमलुवौ परमलुव ॥ अत्र खलपूशब्दस्य परमलूशब्दस्य च को भेद इति न शङ्कनीयम् ॥ तत्र खल पुनातीति खलपूरिति समासानन्तर क्विप् । अत्र तु लुनातीतीति लू परमश्चासौ लूश्च परमलूरिति क्विप्प्रयानन्तर समास । अत कारकासमस्तत्वात्कारकसमस्त-धातुत्व नास्तीति भेदो ज्ञेय ॥

विभूमित्रभूप्रतिभूआत्मभूस्वभूप्रभृतय ॥ दृन्भूशब्दात्स्वादय । दृन् पुनरिति वचनात् यणेव । दृन्भू । दृन्भ्वौ । दृन्भ्व ॥ एव पुनर्भूकारभूवर्षाभूशब्दा ॥ ऋकारान्त पुंलिङ्ग पितृशब्द । तत स्वादय । ऋदुशनसित्यादिना सोर्डा देश । अन्त्याजादिलुक् । अजादौ ॥

१६९ ङ्यौटिघृतोऽपदस्याट् ।१।२।१०२। अपदस्य ऋतोऽर्भवति ङौ औट्सु च परेषु ॥ एकामन्त्रणे न डान्लुगिति ङानिषेधे ह्रस्वैत इति ऋत आसन्नोऽर् सुलुक ॥ शसि नन्त पुंस इति ऋन् सलुक । टादौ यन् । ङसिङसो ॥

१७० ङातो डुः ।१।२।१०३। अपदान्ताद्दतो ङसिङसोरतो डुर्भवति॥ ड इत् अन्त्याजादिलुगर्थ । आमो नमहूस्वादसाट इति नाम् । दीर्घ ॥ ऋवर्णमध्ये रेफसद्भावात् अभिन्न इति नम्य ण । डावर् शेष पूर्ववत् । पिता । पितरौ । पितर ॥ हे पित । हे पितरौ । हे पितर ॥ पितर । पितरौ । पितॄन् ॥ पित्रा । पितृभ्या । पितृभि ॥ पित्रे । पितृभ्या । पितृभ्य ॥ पितु । पितृभ्या । पितृभ्य ॥ पितु । पित्रो । पितॄणा ॥ पितरि । पित्रो । पितृषु ॥ एव भ्रातृजामातृप्रभृतय ॥ तृप्रत्ययान्तस्य नेतृशब्दस्य भेदोऽस्ति । तत स्वादय सोर्डादि । ङ्यौट्स्वरादेशे कृते ॥

१७१ अप्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्त्रदीर्घ ।१।

---

१ सुऔ इत्यौकारादारभ्य अम् औटिति टकारेण सह प्रत्याहार औडिति ।

२ ङसिङसोरत ङात् । अथवा ङकारानुबन्धेनोपलक्षितोऽत् ङात् ॥ तस्य ङात । अथवा ङा इतीत्थम्भूतलक्षणे तृतीया तथाच ङा ङकारेणोपलक्षितो योऽकारस्तस्येत्यर्थ । ङकारेणोपलक्षितोऽकार इहानयोरेवन्याह ङसिङसोरिति ॥ अत इति किं मात्रे पित्रे । ऋतोऽपदात् इति पूर्वसूत्रानुवर्तनमेव नान्यत् । तर्हि तत्र षष्ठ्यन्तग्रहणमत्र पञ्चम्यन्त ग्रहण विरुद्धमिति न शङ्कनीयम् । अर्थवशाद्विभक्तिविपरिणाम इति क्वचिद्भवत्येव ॥

३ ऋकारोच्चारणकाल आदावकारप्रतीतिमध्ये रेफप्रतीतिरन्ते उकारप्रतीति । अत धारणामध्ये रेफोऽस्त्येव ॥

४ तृ इति अर्थवत प्रत्ययस्य ग्रहणमिति नप्त्रादीनाम् पुनःशानां प्रातिपदिकाना स ङ्ग्राशब्दानामग्रहणमतस्तेषां पृथगुपादानम् । इदमेव ज्ञापक अर्थवद्ग्रहणे नानर्थकस्येति परिभाषाया ॥

२।१२३। तृमत्ययातस्यावादीनां चाकारो दीर्घो भवति शावनपुंसके सुटि परे न चैकामन्त्रणे ॥ अन्यत्र पितृशब्दवत्प्रक्रिया । नेता । नेतारौ । नेतारः हे नेत । हे नेतारौ । हे नेतारः ॥ नेतारं । नेतारौ । नेतॄन् । इत्यादि ॥ एवं नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृशब्दा भेत्तृकर्तृप्रमृतम्यतृप्रत्ययान्ताश्च नेया ॥ नृशब्दस्यामि विशेषः ॥

१७२ नुर्वा ।१।२।१४१। नृशब्दस्य नामि परे पूर्वोऽग्दीर्घो वा भवति ॥ ना । नरौ । नरः ॥ नृणां नॄणां ॥ शेषं पितृशब्दवत् ॥ क्रोष्टुशब्दात् स्यादयः ॥

१७३ क्रोष्टो क्रोष्टृ ।१।२।१३१। क्रोष्टुशब्दस्य क्रोष्टृ इति तृमत्ययान्त आदेशो भवति स्यनप्सुटि परे नैकामन्त्रणे ॥

१७४ वाऽच्यापि ।१।२।१३२। क्रोष्टुशब्दस्य क्रोष्टृ इत्यादेशो वा भवति अजादावापि परे ॥ अन्यत्र कारुशब्दवत् । आमि नित्यत्वान्नामि न क्रोष्टृभावः । क्रोष्टा । क्रोष्टारौ । क्रोष्टारः ॥ हे क्रोष्टो । हे क्रोष्टारौ । हे क्रोष्टारः ॥ क्रोष्टारं । क्रोष्टारौ । क्रोष्टून् ॥ क्रोष्ट्रा । क्रोष्टुना । क्रोष्टुभ्यां । क्रोष्टुभिः ॥ क्रोष्ट्रे क्रोष्टवे । क्रोष्टुभ्यां । क्रोष्टुभ्यः ॥ क्रोष्टुः क्रोष्टोः । क्रोष्टुभ्यां । क्रोष्टुभ्यः ॥ क्रोष्टुः क्रोष्टोः । क्रोष्ट्रोः क्रोष्ट्वोः । क्रोष्टूनां ॥ क्रोष्टरि क्रोष्टौ । क्रोष्ट्रोः क्रोष्ट्वोः । क्रोष्टुषु ॥ ऋकारलृकारॡकारान्ता अप्रसिद्धाः ॥ एकारान्तः परमेशब्दः ततः स्यादयः । अजादौ अय् । एकामन्त्रणे एङः सोश्च लुक् । ङसिङसारेङो लुक् । परमेः । परमयौ । परमयः । इत्यादि ॥ एवमतिहेमभृतयः ॥ ओकारान्तो गोशब्दः ततः स्यादयः ॥

१७५ ओतोऽओ ।१।२।११७। ओतः औद्भवति स्यनप्सुटि परे ॥ अन्शसो ॥

---

१ टा इति तृतीयैकवचनस्याकारेण सह सुपिति सप्तमीबहुवचनस्य पकारस्य प्रत्याहारे कृते आप् सञ्ज्ञा भवति ॥ अचीति किं? क्रोष्टुभ्याम् । क्रोष्टुभ्यः । आपीति किं? क्रोष्टून् ॥

२ परं मयते प्रतिदधातीति परमः । अथवा परमा इर्लक्ष्मीर्यस्यासौ परमः । परमः स्वासौ इश्चेति वा इः कामः ॥

३ औ इत्यविभक्तिको निर्देशः । ओत इति किं? चित्रगुः । तकारो निर्देशार्थः । लाक्षणिकत्वादिह न भवति हे चित्रगो हे चित्रगवः ॥

**१७६ डाम्शसः** ।१।२।११८। ओत परयोरम्शसोरादेर्डादेशो भवति ॥ ट इत् अन्त्याजादिलुगर्थ । टादौ सन्धि । ङसिङसोरत एङो लुगिति लुक् । गौ । गावौ । गाव ॥ हे गौ । हे गावौ । हे गाव ॥ गा । गावौ । गा ॥ गवा । गोभ्या । गोभि ॥ गवे । गोभ्या गोभ्य ॥ गो । गोभ्या । गोभ्य ॥ गो । गवो । गवा ॥ गवि । गवो । गोषु ॥ ऐकारान्तो रैशब्द । तत स्वादय । "वाष्ठ आ ।२४५। "इत्यधिकृत्य ॥

**१७७ राय स्भि** ।१।२।२२०। राय आङ्भवति सभादौ सुपि परे ॥ स च पष्ठ्यास्स्थानेऽन्तेऽल इत्यैतो भवति। अन्यत्राय्। रा । रायौ। राय ॥ हे रा । हे रायौ। हे राय ॥ राय । रायौ। राय ॥राया । राभ्या। राभि ॥ राये । राभ्या । राभ्य ॥ राय । राभ्या । राभ्य ॥ राय । रायो। राया॥ रायि । रायो । रासु ॥ औकारान्त पुल्लिङ्गो ग्लौशब्द । तत स्वादय अच्यार्। ग्लौ । ग्लावौ । ग्लाव ॥ हे ग्लौ । हे ग्लावौ । हे ग्लाव ॥ ग्लाव । ग्लावौ । ग्लाव ॥ ग्लावा । ग्लौभ्या। ग्लौभि ॥ ग्लावे । ग्लौभ्या। ग्लौभ्य ॥ ग्लाव । ग्लौभ्या । ग्लौभ्य ॥ ग्लाव । ग्लावो ॥ ग्लावा ॥ ग्लावि । ग्लावो । ग्लौषु ॥

॥ इत्यजन्ता पुल्लिङ्गास्समाप्ता ॥

## ॥ अथाजन्तास्त्रीलिङ्गा उच्यन्ते ॥

तेष्वकारान्तस्याभावादाकारान्तस्त्रीलिङ्गो दयाशब्द । दय इति स्थिते। "त्रिचतुर स्त्रिया तिसृचतसृ १९२"। "ऋच्याङ् ।१।३।११।" इत्यधिकृत्य ॥

---

१ पाद ताच्छब्दाहपि स्त्रियामाङ्प्रत्ययो भवति ॥ त्रिपदा चतुष्पदा । परस्मादन्याः जातिङ्ग पाधिष्पा पद्भाव । ङकार उच्चारणार्थ । अन्यत्र द्विपदी देवदत्ता ।

१७८ अजाद्यताम् ।१।३।१३। अजादेरदन्ताच्च स्त्रियामाप्प्रत्ययो भवति ॥ ड इत् अन्त्यानादिलुगर्थं । तत पूर्ववत् स्यादय हल्ङ्याबादिति सोर्लुक् । "त्पोऽचो ह्रस्व ।२१५"

१७९ आङश्चौतो गी[1] ।१।२।१०। नपुंसकस्याङन्तस्य च सम्बन्धिन औत सुपो गीर्भवति ॥ ग इत् गित इति सन्धिप्रतिषेधार्थं । एङ् । जसि दीर्घादि । एकामन्त्रणे ॥

१८० एद्राङ[2] ।१।२।१२४। आङ एद्भवति एकामन्त्रणे सौ परे सोश्च लुक् ॥ औजसो प्राग्वत् । अमि मत्वलुचौ । औटि पूर्ववत् । शसि । "दीर्घ । १३" इत्यधिकृत्य ॥

१८१ शस्यक् ।१।१।७८। अकस्साचोऽदीर्घो भवति शसि परे ॥ सस्य रिविसर्जनीयौ । टाया ॥

१८२ टौस्येत् ।१।२।२१। आङ एद्भवति टौसो परत ॥ अय् । हलादावविशेष । ङिति ॥

१८३ ङितो याट् ।१।२।२०। आङो ङितस्सुपो याडागमो भवति ॥ ट इत् देशविध्यर्थं ॥

१८४ टिदादि ।१।१।५३। टिद्यस्य विधीयते तस्यादिर्भवति ॥ ऐच् ।

---

१ अज अश्व एडक कोकिल चटक मूषिक बाल होड पाक शकुर वत्स मन्द दीत लाश कन्य पूर्वापहण अपरापहण पर प्रहाण निफल कुच उष्णिहा देवविशा सृन् इत्यजादिगण ॥ अत्र अजादि अताम् इति पदच्छेद । अत कोपगन्धा खट्वा देवदत्ता । तकार किं क्षीरपा कन्या । षष्ठया तत्सम्बन्धिन्यामेव स्त्रियां भवति नान्यथा पञ्चानाम जानां समाहार पञ्चाजी । इदमेव ज्ञापक अतस्तत्सम्बन्धिन्यामेव प्रत्यय इति ॥ बहुत्व पञ्चपाभिव्यक्त्यर्थम् ॥ अतामित्येव सिद्ध पुनरजादिग्रहण बाधकबाधनार्थम् । अनकारान्तार्थोभयार्थमजादिग्रहणम् ॥ अजेत्यादौ "जातेरस्त्रीविषयशूद्रात् । ३२६" इति सूत्रेण प्राप्तस्य ङ्यो बाधा । बाला कन्या इत्यादौ "वयस्यनन्त्ये । ३११" इति सूत्रेण प्राप्तस्य ङ्यो बाधा । क्रुञ्चा उष्णिहा इत्यनाप्राप्ताद् तथापाठादेव न अन्त्यजादेर्लोपाभाव ॥ २ द्विवारमग्रहण किमिति चेत् परे विद्यमानाका घटितस्य पूर्वाकस्तदा सम्भेदीर्घोऽङ् भवतीति ज्ञापनार्थम् ।

ङसिङसोर्दीर्घौ। ओस्येदयो। आमो नमुह्रस्वाद्‌साट इति नाम्। ङेर्याडि न्येशादाम् इत्या दीर्घ। ओसि मावत्। दया दये दया। हे दये हे दये हे दया। दया दये दया। दयया दयाभ्या दयाभि। दयायै दयाभ्या दयाभ्य। दयाया दयाभ्या दयाभ्य। दयाया दययो दयाना। दयाया दययो दयासु॥ एव जायागायाजृम्भारम्भातारा हारामालासुद्राप्रभृतय॥ अम्बाशब्दस्य एकामन्त्रणे॥

१८५ अचोऽम्बार्थस्य।१।२।१२३। अम्बार्थस्य द्यच आडन्तस्य ह्रस्वो भवत्येकामन्त्रणे सोश्च लुक्॥ अन्यत्र दयाशब्दवत्। अम्बा अम्बे अम्बा। हे अम्ब हे अम्बे हे अम्बा। इत्यादि। एव अक्काऽल्लादय। द्यच इति किं? हे अम्बिके इत्यादि॥ जराशब्दस्याजादौ सुपि विशेषोऽस्ति॥

१८६ जराया ङसिन्द्रस्याचि।१।२।३७। जराशब्दस्य ङस् वा भवति अजादौ सुपि परे॥ ङ इत् अन्त्यादेशार्थ पक्षे दयाशब्दवत्। जरा। जरसौ जरे। जरस जरा॥ हे जरे। हे जरसौ हे जरे। हे जरस हे जरा॥ जरस जरा। जरसौ जरे। जरस जरा॥ जरसा जरया। जराभ्या। जराभि॥ जरसे जरायै। जराभ्या। जराभ्य॥ जरस जराया। जराभ्या। जराभ्य॥ जरस जराया। जरसो जरयो। जरसा जराणा। जरसि जराया। जरसो जरयो। जरासु॥ सर्वशब्दादाङि तत स्यादय। ङिति याटि॥

१८७ डस्यौदवस्य।१।२।१७५। अवर्णान्तस्य सर्वादेर्डस् भवति याटि परे॥ ड इत् अन्त्यादेशार्थ। आम साम्। अन्यत्र दयाशब्दवत्।

१ आदिशब्देन अम्बा अत्ता शब्दयोर्ग्रहणम्॥

२ एकदेशविकृतस्यानन्यत्वादतिजराशब्दस्यापि ग्रहणम्। इन्द्रस्य इन्द्राचार्यस्य मतेन। अन्येषां मतेन न भवति। अचीति किं? जराभ्या जराभि। सुपीति किं जरार्य। जारेय॥

३ याटि तत्सम्बन्धिनि याडादौ सुपीत्यर्थ। इह न भवति सर्वस्य। तत्सम्बन्धिनीति विज्ञानादिह न भवति प्रियसर्वायै। अस्येत्युत्तरार्थम्॥ अस्येति किं? भवतां भवतीनाम्॥

सर्वा सर्वे सर्वा ॥ हे सर्वे हे सर्वे हे सर्वा । सर्वा सर्वे सर्वा । सर्वया सर्वाभ्या सर्वाभि । सर्वस्यै सर्वाभ्या सर्वाभ्य । सर्वस्या सर्वाभ्या सर्वाभ्य । सर्वस्या सर्वयो सर्वासा । सर्वस्या सर्वयो सर्वासु ॥ एव विश्वादय ॥ पूर्वादीनामदिदादो सुपि । परे ङस् अन्यत्र दयाशब्दवत् । पूर्वस्या पूर्वाया ॥ त्यद्शब्दस्यात्वालुचोरादि कृते तत स्यात्य । सो तोऽष्टानामिति तस्य स । शेष सर्वाशब्दवत् । स्या त्ये त्या । इत्यादि ॥ तच्छब्दस्य । सा ते ता । ता ते ता । तया ताभ्या ताभि । तस्यै ताभ्या ताभ्य । तस्या ताभ्या ताभ्य । तस्या तयो तासा । तस्या तयो तासु ॥ एव यच्छब्दस्य । या ये या । इत्यादि ॥ अदस्शब्दात् स्यादौ सा पुवत् । अन्यत्रात्वालुचोरादि कार्यांतरे च कृते पश्चात् मत्वगुत्वे । पत्वनिषेधात् प्रागेव गुत्व शेष सर्वाशब्दवत् । असौ अमू अमू । अमूम् अमू अमू । अमुया अमूभ्या अमूभि । अमुष्यै अमूभ्या अमूभ्य । अमुष्या अमूभ्या अमूभ्य । अमुष्या अमुयो अमूषा । अमुष्या अमुयो अमूषु ॥ इदम सौ ॥

१८८ इय् ।१।२।२११। इदम इद्रूपस्य इय् भवति सौ परे ॥ सुलुक् । अन्यत्रात्वालुचोरादि दस्य म गोरिंगादि । टौसोरने आडेत्यादि । समयादौ सुप्यश्याङ् । ङिति आङि याटि च अगि च कृते पुनर्दम् । शेष मासवत् । इयम् इमे इमा । इमाम् इमे इमा । अनया आभ्या आभि । अस्यै आभ्याम् आभ्य । अस्या आभ्याम् आभ्य । अस्या अनयो आसाम् । अस्याम् अनयो आसु ॥ एतद्शब्दस्य सौ तस्य स षत्व च । शेष तच्छब्दवत् अन्यत्राविशेष । एषा एते एता । इत्यादि ॥ अन्वादेशे । एनाम् एने एना । एनया । एनयो । एनयो ॥ ऐकश

१ तृतीयादौ टास्यादित्यादिकार्यम् ॥

२ असत्वे सत्यादेश पुनगु । प्राक् मत्व अनन्तर आङ् अत्याकारलुक् पश्चादाङो द्विमात्रको गु ॥

३ पारिशेष्यात्स्त्रियामयमादेश । नपि तु नित्यत्वात्प्रथममेव लुग्भवति ॥

४ आदिशब्दादेवादि भवति ॥

५ अनियमवाचिन एकशब्दस्य द्विवचनादयो भवन्ति ॥

ब्दस्य । एका एके एका । इत्यादि ॥ द्विशब्दस्य अत्वाड्गीत्वादौ । द्वे । द्वे । द्वाभ्या । द्वाभ्या । द्वाभ्या । द्वयो । द्वयो ॥ किम कादेशे आड् । शेष तच्छब्दवत् । का के का । इत्यादि ॥ द्वितीयाशब्दस्य सर्वादित्वपक्षे ङस् अन्यत्र सर्वत्र दयाशब्दवत् । द्वितीया द्वितीये द्वितीया । इत्यादि । ङिति द्वितीयस्यै द्वितीयायै । द्वितीयस्या द्वितीयाया । द्वितीयस्या द्वितीयाया । द्वितीयस्या द्वितीयाया । सुगम शेषम् । एव तृतीयाशब्द ॥

**१८९ विदिक् च**[1] ।१।२।१७४। विदिग्वाचि शब्दरूप सर्वादि वा भवति ॥ उत्तरपूर्वस्यै उत्तरपूर्वायै । उत्तरपूर्वासाम् उत्तरपूर्वाणाम् । एव दक्षिणपूर्वादय ॥ नासिकाशब्दात् स्वादय सुटि दयाशब्दवत् । असुटि पद्दन्नित्यादिना वा नसादेश । तस्मिन् नसादेशस्य वलादौ पदत्वाद्धित्वादि । नासिका नासिके नासिका । इत्यादि । शसादौ । नस नासिका । नसा नासिकया । नोभ्या नासिकाभ्या । नोभि नासिकाभि ॥ नसे नासिकायै । नोभ्या नासिकाभ्या । नोभ्य नासिकाभ्य ॥ नस नासिकाया । नोभ्या नासिकाभ्या । नोभ्य नासिकाभ्य ॥ नस नासिकाया । नसो नासिकयो । नसा नासिकाना ॥ नसि नासिकाया । नसो नासिकयो । नस्सु न सु नासिकासु ॥ निशाशब्दात् स्वादय । सुटि दयाशब्दवत् । असुटि पद्दन्नित्यादिना वा निशित्यादेश । तस्य वलादौ पदत्वे ॥

**१९० व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** ।१।२।९०। व्रश्चादीना चवर्गस्य छकारशकारयोश्च षकारो भवति पदान्ते जलि च परे॥ इति शस्य षकार प्राप्त चो कुरिति कुत्व च अषात्वात्र भवत । जलो जशिति शस्य ज । सुपि जश्त्वे श्चुत्वेन सस्य श । शश्छोऽमीति वा छत्वं चर्त्वं च । अन्यत्र दयाशब्दवत् । निशा निशे निशा । इत्यादि । शसादौ निश निशा ॥ निशा निशया । निज्भ्या निशाभ्या । निज्भि निशाभि ॥ निशे निशायै । निज्भ्या निशाभ्या । निज्भ्य निशाभ्य ॥ निश निशाया

[1] चकारो वेत्यस्यानुकर्षणार्थ । नानुक्तसमुच्चयाय । 'नव पूर्वा वादौ ।' ।१।२।१७२। इत्यस्माद्वाऽनुवर्तते । उत्तरत्र नानुवर्तते ॥

निज्भ्यां निशाभ्यां । निज्भ्यः निशाभ्यः ॥ निशः निशायाः । निशोः निशयोः । निशां निशानां ॥ निशि निशायां । निशोः निशयोः । निट्सु निच्छु निशासु ॥ इकारान्तस्त्रीलिङ्गो रुचिशब्दः ततः स्यादयः सुटि रविशब्दवत्[1] शसि शस्यगिनि दीर्घः । अस्त्रीनि निषेधात् टायां न नाभावः । यत्रः । ङिति । " इदुतो ग्यैतोऽस्त्रे ।१४०। " इत्यधिकृत्य ॥

**१९१ स्त्रियाः चादः** ।१।२।२१। नीलिङ्गादिकारान्तादुकारान्ताश्च परस्य ङितः सुपः आट् भवति ॥ टः इत् आदिविध्यर्थः ऐनादि । डेराम् आडभावे रविशब्दवत् । रुचिः रुची रुचयः । हे रुचे हे रुची हे रुचयः । रुचिं रुची रुचीः । रुच्या रुचिभ्यां रुचिभिः । रुच्यै रुचये रुचिभ्यां रुचिभ्यः । रुच्याः रुचेः रुचिभ्यां रुचिभ्यः । रुच्याः रुचेः रुच्योः रुचीनां । रुच्यां रुचौ रुच्योः रुचिषु ॥ एवं मतिकृतियुवतिबुद्धिसिद्धिप्रभृतयः ॥ विंशत्यादयः सङ्ख्येये एकवचनान्ता एव ततः स्यादयः । रुचिशब्दवत्प्रक्रिया । विंशतिः । हे विंशते । विंशतिं । विंशत्या । विंशत्यै विंशतये । विंशत्याः विंशतेः । विंशत्याः विंशतेः । विंशत्यां विंशतौ । एवं षष्टिसप्ततिअशीतिनवतिशब्दाः ॥ सङ्ख्यानवाचित्वे तु द्विवचनबहुवचनान्ता अपि भवन्ति । द्वे विंशती । बहवो विंशतयः ॥ त्रिशब्दात् जसादयः ॥

**१९२ त्रिचतुरः[2] स्त्रियां तिसृचतसृ** ।१।२।२२०। स्त्रीलिङ्गे त्रिचतुरोः तिसृचतसृ इति क्रमेण आदेशौ भवतः सुपि परे ॥ इति त्रिशब्दस्य तिसृ ॥

**१९३ रोऽनेपोऽच्यु** ।१।२।२२२। तिसृ चतसृ इत्येतयोः ऋकारस्य

---

१ स्त्रिया इति पञ्चमी न षष्ठी । पञ्चम्या च परत्वमात्रं गृह्यते न व्यवधानसम्बन्धि- समन्यसम्बन्धित्वं वा सुपो विशेषः । ततोऽभयत्रापि भवति विशेषानाश्रयणात् । विशेषाश्रयणे तु विशेषान्तरे न स्यादित्याद्रियते ॥ स्त्रिया इति किं? मुनयः साधवे ॥

२ उद्देश्यविधेययोः समसङ्ख्याकत्वे यथासङ्ख्यं विधेयान्वयो भवति ॥

३ तत्सम्बन्धिन्यन्यसम्बन्धिनि वा सुपि परे अयमादेशः भवति ॥ तत्सम्बन्धिनि तिस्रः चतस्रः । अन्यसम्बन्धिनि प्रियतिस्रः प्रियचतस्रः । अनप इति किं? प्रियतिसृणि ॥ अचीति किं? तिसृभिः चतसृभिः ॥

रस्य रेफादेशो भवति अजादौ सुपि परे न नपि ॥ आमो नामि अतिसृ-चतुष्प इति वचनान्न दीर्घ । तिस्र । हे तिस्र । तिस्र । तिसृभि । तिसृभ्य । तिसृभ्य । तिसृणा । तिसृषु ॥ ईकारान्तस्त्रीलिङ्गो लक्ष्मीशब्द । तत स्वादय । रुविसर्जनीयौ । अजादौ यत्र् । एकामन्त्रणे नित्यादृत्वात ह्रस्व सुलुक । अमि मत्नलुचो । शसि दीर्घ । ङिति “ स्त्रिया वाट् ।१९१। ” इत्यधिकृत्य ॥

**१९४ ङ्योऽपुंस** ।१।२।३०। अपुंसि स्त्रिया वर्तमानादीकारान्तादूकाराताच्च परस्य ङित सुप आड् भवति नित्यम्[1] ॥ ट इत् आदिनिम्य र्थे । ऐजादि । सम्भवदादृत्वादामो नामि णत्वम् । आटि ङेराम् । लक्ष्मी लक्ष्म्यौ लक्ष्म्य । हे लक्ष्मि हे लक्ष्म्यौ हे लक्ष्म्य । लक्ष्मीं लक्ष्म्यौ लक्ष्मी । लक्ष्म्या लक्ष्मीभ्या लक्ष्मीभि । लक्ष्म्यै लक्ष्मीभ्या लक्ष्मीभ्य । लक्ष्म्या लक्ष्मीभ्या लक्ष्मीभ्य । लक्ष्म्या लक्ष्म्यो लक्ष्मीणा । लक्ष्म्या लक्ष्म्यो लक्ष्मीषु ॥ एव तन्त्रीतन्द्रीतरीदरीप्रभृतय ॥ ङीप्रत्ययान्तस्य गौरीशब्दस्य सो भेदोऽस्ति । हल्ङ्याडिति सोर्लुक् । अन्यत्र लक्ष्मीशब्दवत् ॥ गौरी गौर्यौ गार्य । इत्यादि । एव क्रोष्ट्रीराज्ञीभवतीभवन्तीपचन्तीप्राचीप्रतीचीउभयीकार्तिकीचैत्रीदाक्षीकुमारीपत्नीमुमुर्खीत्रिलोकीगेहिणीअर्याणीगणकीहिमानी–भूमीशुर्वीपल्क्नीपिशङ्गीमयूरीसखीप्रभृतयो ङ्यन्ता नेया ॥ स्त्री[2]शब्दवत् स्वादय हल्ङ्याडिति सोर्लुक् । अजादौ ॥

**१९५ स्त्रिया** ।१।२।४२। स्त्रीशब्देवर्णस्येय् भवति अजादौ सुपि परे ॥

**१९६ वामशसि** ।१।२।४३। स्त्रीशब्दस्येवर्णस्येय् वा भवति अमूग

---

१ नित्यमित्यनेनान्यसम्बन्धिनो वा भवतीत्यर्थ । नद्यै लक्ष्म्यै । अतिलक्ष्म्यै अतिलक्ष्मये स्त्रियै पुरुषाय वा ॥

२ स्यतस्त्यायतेस्तृणातेस्तनातेर्वा औणादिकसूत्रेण त्रट् प्रत्ययो धातोश्च सकारादेशो निपात्यते । टित्त्वान् ङी । तृणानि स च पर च दोषेणाच्छादयतीति स्त्री ॥

सो परत ॥ ङिति आट् । आमो नाम् । ङेराम् । शेष सुगम । स्त्री स्त्रियौ स्त्रिय । हे स्त्रि हे स्त्रियौ हे स्त्रिय । स्त्रिय स्त्रीं स्त्रियौ स्त्रिय स्त्री । स्त्रिया स्त्रीभ्या स्त्रीभि । स्त्रियै स्त्रिभ्या स्त्रीभ्य । स्त्रिया स्त्रीभ्या स्त्रीभ्य । स्त्रिया स्त्रियो स्त्रीणा । स्त्रिया स्त्रियो स्त्रीपु ॥ श्रीशब्दात् स्वादय । अड्यन्तत्वात् सोर्न लुक् । अजादौ भ्रूहलितीय् । एकामन्त्रणे विकल्पितादृत्वात् न ह्रस्व । ङिति ॥

१९७ वेयुवोऽस्त्रिया॰ ।१।२।३१। इयुवादेशभावीकारोकारान्ता भ्या स्त्रीलिङ्गाभ्या परस्य ङितस्सुप आड्वा भवति न स्त्रीशब्दस्य ॥ पुनरियू॥

१९८ नामाम॰ ।१।२।३२। इयुवादेशभावीकारोकारान्ताभ्या स्त्री॰ लिङ्गाभ्या परस्यामो नाम् वा भवति न स्त्रीशब्दस्य ॥ शेष प्राग्वत् । श्री श्रियौ श्रिय । हे श्री हे श्रियौ हे श्रिय । श्रिय श्रियो श्रिय, । श्रिया श्रीभ्या श्रीभि । श्रियै श्रिये श्रीभ्या श्रीभ्य । श्रिया श्रिय श्रीभ्या श्रीभ्य ॥ श्रिया श्रिय श्रियो श्रीणा श्रिया । श्रिया श्रियि श्रियो श्रीपु ॥ एव धी नीप्रभृतय ॥ उकारान्तस्त्रीलिङ्गो धेनुशब्द । तत स्वादय । स्त्रिया वाट् । धेनु धेनू धेनव । हे धेनो हे धेनू हे धेनव । धेनु धेनू धेनू । धेन्वा धेनुभ्या धेनुभि । धेन्वै धेनवे धेनुभ्या धेनुभ्य । धेन्वा धेनो धेनुभ्या धेनुभ्य । धेन्वा धेनो धेन्वो धेनूना । धेन्वा धेनौ धेन्वो धेनुपु । एव तनु- रज्जुस्नायुऊरुकरेणुप्रभृतय ॥ ऊकारान्तस्त्रीलिङ्गो जम्बूशब्द तत स्वादय लक्ष्मीशब्दवत् । जम्बू जम्ब्वौ जम्ब्व । हे जम्बु हे जम्ब्वौ हे जम्ब्व । जम्बू जम्ब्वौ जम्बू । जम्ब्वा जम्बूभ्या जम्बूभि. । जम्ब्वै जम्बूभ्या जम्बूभ्य । जम्ब्वा जम्बूभ्या जम्बूभ्य । जम्ब्वा जम्ब्वो

१ स्त्रीणामित्यत्र तु नम् ह्रस्वाद् साट. ।११९ इति सूत्रेण स्त्रीशब्दस्य साट्ना दाम षष्ठीबहुवचनस्य स्थाने नित्य नामित्ययमादेशो भवतीत्यमाघवृत्तावुक्तम् ॥

२ स्त्रीशब्दस्य न भवतीति किं? स्त्रीणा परमस्त्रीणां । अत्राप्यन्यसम्बन्धिन आमो नाम् वा भवतीत्यर्थ । श्रीणा श्रियां । सुश्रीणा सुश्रियां स्त्राणा सुस्त्राणा वेति । अत एव प्राक् पुल्लिङ्गेषु सुश्रियां सुस्त्राणामित्युदाहृतम् ॥

जम्बूना। जम्ब्वा जम्ब्वो जम्बूषु। एवं चमूवधूयवागूकद्रूप्रभृतयः॥ भ्रूशब्दात् स्वादयः। अचि श्नुधात्वित्युव् शेषं श्रीशब्दवत्। भ्रूः भ्रुवौ भ्रुवः। हे भ्रूः हे भ्रुवौ हे भ्रुवः। भ्रुवं भ्रुवौ भ्रुवः। भ्रुवा भ्रूभ्यां भ्रूभिः। भ्रुवै भ्रुवे भ्रूभ्यां भ्रूभ्यः। भ्रुवाः भ्रुवः भ्रूभ्यां भ्रूभ्यः। भ्रुवाः भ्रुवः भ्रुवोः भ्रूणां भ्रुवां। भ्रुवां भ्रुवि भ्रुवोः भ्रूषु॥ एवं सुभ्रूप्रभृतयः॥ ऋकारान्तस्त्रीलिङ्गो मातृशब्दः। ततः स्वादयः पितृशब्दवत्। शसि तु शस्यगिति दीर्घः। माता मातरौ मातरः। हे मातः हे मातरौ हे मातरः। मातरं मातरौ मातॄः। इत्यादि। एवं दुहितृननान्दृयातृप्रभृतयः॥ स्वसृशब्दस्य आरेः तृन्स्वस्रित्यादिना दीर्घः। स्वसा स्वसारौ स्वसारः। हे स्वसः हे स्वसारौ हे स्वसारः। स्वसारं स्वसारौ स्वसॄः। इत्यादि॥ ॠकारऌकारॡकारान्ता अप्रसिद्धाः॥ एकारान्तः परमेशब्दः पुल्लिङ्गवत्॥ ओकारान्तो द्योशब्दः। ततः स्वादयः गोशब्दवत्। द्यौः द्यावौ द्यावः। इत्यादि॥ ऐकारान्तः सुरैशब्दः। ततः स्वादयः रैशब्दवत्। सुराः सुरायौ सुरायः। इत्यादि॥ औकारान्तो नौशब्दः। ततः स्वादयः ग्लौशब्दवत्। नौः नावौ नावः॥

॥ इत्यजन्ताः स्त्रीलिङ्गाः समाप्ताः॥

## ॥ अथाजन्ता नपुंसकलिङ्गा उच्यन्ते॥

तत्राकारान्तनपुंसकलिङ्गो ज्ञानशब्दः। ततः स्वादयः। नपोऽचो ह्रस्वः। "पञ्चतोऽनेकतरस्यान्यादेर्दक् स्वमोः।२१३।" इत्यधिकृत्य॥

१९९ अतोऽम्।१।२।४। अकारान्तस्य नपुंसकस्य सम्बन्धिनोः स्वमोरमित्यादेशो भवति॥ मत्वलुचौ औतो गी॥

---

१ अत इति पञ्चमीविज्ञाने नपुंसकापेक्षया परत्वमात्रमुपादाय विधौ प्रियकुण्डः अतिकुण्ड इत्यत्रापि स्यात् इति तत्सम्बन्धिविज्ञानेनाह नपुंसकस्य सम्बन्धिनोरिति॥ सूत्रे अत इति तकारः किमर्थः? ननु तेयानित्यवधारणार्थ इति चेन्न प्रमाणाभावात्। 'नपोऽचो ह्रस्वः।२१६" इति विधानाच्च इति चेन्न, तकारो लाघवार्थः। यदि 'अस्याम्' इत्युच्येत गुरुद्वयं स्यात्॥

२०० जश्शसः शि ।१।२।१८। नपुंसकस्य जश्शसो शिर्भवति ॥ श इत् सर्वादेशार्थ । " नम्सुपि ।२१७। " इत्यधिकृत्य ॥

२०१ शावचः ।१।२।११। अजन्तस्य नपो नम् भवति शौ परे ॥ अमावितौ । अकार उच्चारणार्थ । मकारो देशविध्यर्थ ॥

२०२ मिदचोऽन्त्यात् ।१।१।४५। मित्रस्य विधीयते तस्याचान्त्यादच परो भवति ॥ " सप्स्वसृ० ।१७१। " इत्यधिकृत्य ॥

२०३ न्यक् ।१।२।१३४। दयनप्सुटि परे यो नकार तस्मिन् परे पूर्वोऽर्दार्घो भवति न चेकामन्त्रणे ॥ आमन्त्रणे सोरमि ह्रस्वोऽमश्च लुक् । औजसो मात्रत् । अमि मत्वट्चौ । औटो गी । शस शौ मात्रत् । टादौ पुवत् । ज्ञान ज्ञाने ज्ञानानि । हे ज्ञान हे ज्ञाने हे ज्ञानानि । पुनस्तद्वत् । ज्ञान ज्ञाने ज्ञानानि । ज्ञानेन ज्ञानाभ्या ज्ञानै । इत्यादि शेष धर्मशब्दवत् ॥ एव दर्शनचारित्रधनधान्यकुलादय ॥ हृदयशब्दस्य प्रथमाद्वितीययो ज्ञानशब्दवत् । टादौ पदन्नित्यादिना वा हृदित्यादेश । सुपि चर्त्वे । हृदा हृदयेन हृभ्या हृदयाभ्याम् इत्यादि । हृत्सु हृदयेषु ॥ उदकशब्दस्यापि टादा पद्दन्नित्यादिना वा उदन्नित्यादेश । अजादौ । " पादोऽपदस्य न्यमुट्छ्यादौ पद् ।२५२। " इत्यधिकृत्य ॥

२०४ श्नोऽनोऽह्रस्वमात् ।१।२।१४०। अपदान्तस्यान श्नादेशो भवति सुट्छ्यादिवर्जिते प्रत्यये ग्या च परत न हल परान्माच्च परस्य ॥ शतावितौ पूर्ववत् । हलादौ सिद्धलीति पदत्वे । सयोगस्यादिस्को र्टुगित्यधिकृत्य ॥

---

१ मिदचोऽ न्त्यादिति सूत्रे अच इ येकवचन जातावेव । निर्धारणे षष्ठीयम् । निर्धारण च जातिगुणक्रियाभि समुदायादेकदेशस्य पृथक्करणम् । जातौ पुरुषाणा क्षत्रिय शूर । गुणस्य गवा कृष्णा गौ सम्पन्नक्षीरा । क्रियाया गच्छता धावन्त शीघ्रा इस मोघवृत्तौ ॥

**२०५ नं'** ।१।२।९५। पदान्ते नस्य लुग्भवति ॥

**२०६ न्लुक् सुबाश्रये** ।१।२।४७। नस्य लुक् सुबाश्रये कार्ये प्राप्ते असदिव भवति ॥ असत्त्वे भ्यत्वा इत्यादि सुबाश्रय कार्यं न भवति। पुनर्लुक्। लुचि सकृद्बाधितो विधिर्बाधित एवेति युक्त्या पुनरात्वादि न भवति। डौ ॥

**२०७ ङिग्योर्वा** ।१।२।१५०। अपदान्तस्यान श्नो वा भवति ङौ ग्या च परत न हल्त्वमात्परस्य ॥ उद्ना उदकेन उदभ्याम् उदकाभ्याम् उदभि उदके। उद्ने उदकाय उदभ्याम् उदकाभ्याम् उदभ्य उदकेभ्य। उद्न उदकात् उदभ्याम् उदकाभ्याम् उदभ्य उदकेभ्य। उद्न उदकस्य उद्नो उदकयो उद्नाम् उदकानाम्। उद्नि उदनि उदके उद्नो उदकयो उदसु उदकेषु ॥ एवमासनशब्दस्य टादौ आसन्नित्यादेशे प्रक्रिया। आस्ना आसनेन आसभ्याम् आसनाभ्याम् आसभि आसने। आस्ने आसनाय आसभ्याम् आसनाभ्याम् आसभ्य आसनेभ्य। आस्न आसनात् आसभ्याम् आसनाभ्याम् आसभ्य आसनेभ्य। आस्न आसनस्य आस्नो आसनयो आस्नाम् आसनानाम्। आस्नि आसनि आसने आस्नो आसनयो आससु आसनेषु ॥ उपकुम्भशब्दात्स्वादय। "आतोऽनाट श्लुक् १४८।" इत्यधिकृत्य ॥

**२०८ अव्ययीभावस्य** ।१।२।१५५। अव्ययीभावस्य नप सम्बन्धिन सुप श्लुग्भवति ॥ इति श्लुचि प्राप्ताया ॥

---

१ सर्वस्मिन् पुर्वीरन् इत्यत्रापदत्वसामर्थ्यादेव नस्य लुक् न भवति। उपदेश इति कि? 'सर्वादेङसस्मै स्मिन् स्मात् स्मै, इति 'रशौ श्लसा' इत्यादिसूत्रेषु स्मिन् रन् इत्यादिनिर्देश दलर्थं इत्यमापवृत्तौ ॥

२ नो लुक् न्लुक्। आर्धायत इत्याश्रय सुप् आश्रयो य स्मिन्। ध्नहभ्यां ब्रह्महभ्या मित्यत्र 'असिद्ध बहिरङ्गमन्तरङ्गे' इति तम भवति इत्युपे कोऽध अन्तवर्तिन वि भक्त्यमानित्त 'ह्रस्वस्य तक् पिति कृति ।४।१।४२।, इति सूत्रेण तगागम 'अत' इति सूत्रेण लुर् च न भवति। कुत'' 'न' इति सूत्रेण क्रियमाणे नस्य लोप र सुदायाश्रयो भवति यत प ... ।असिद्धमायत्वानित बहिरङ्गत्वायम् ॥

**२०९ नात**[1] ।१।२।१५६। अदन्तस्याव्ययीभावस्य नप सम्बन्धिन स्लुन भवति ॥

**२१० अमपञ्चम्याः** ।१।२।१५७। अदन्तस्याव्ययीभावस्य नप स्वसुपोऽम् भवति न पञ्चम्या ॥ मत्वादि ॥

**२११ तृतीयाया वा** ।१।२।१५८। अदन्तस्याव्ययीभावस्य नप स्वस्यात्तृतीयाया अम् वा भवति॥ पञ्चम्यामपञ्चम्या इति निषेधात् नाम्॥

**२१२ सप्तम्याः** ।१।२१५९। अन्तस्याव्ययीभावस्य नप स्वसप्तम्या अम् वा भवति ॥ उपकुम्भम् उपकुम्भम् उपकुम्भम् । उपकुम्भम् उपकुम्भम् उपकुम्भम् । उपकुम्भम् उपकुम्भेन उपकुम्भम् उपकुम्भाभ्याम् उपकुम्भम् उपकुम्भै । उपकुम्भम् उपकुम्भम् उपकुम्भम् । उपकुम्भात् उपकुम्भात् उपकुम्भाभ्याम् उपकुम्भेभ्य । उपकुम्भम् उपकुम्भम् उपकुम्भम् । उपकुम्भे उपकुम्भम् उपकुम्भयो उपकुम्भम् उपकुम्भेषु उपकुम्भम् ॥ एवम् उन्मत्तगङ्ग पारेसमुद्र मध्येपुरम् अन्तस्ससार यानदमल बहिर्ग्रामम् परिग्रामम् अपग्रामम् आससार प्राग्ग्रामम् अभिमिल प्रतिपुरम् अनुवनम् इतिसमन्तमद्र सुमद्र सस्थलम् आमूलम् अतिशीतम् अध्यात्मम् अनुरथ सतृण यथाक्रम प्रभृतय शब्दा नेया ॥ सर्वादय प्रथमाद्वितीययो ज्ञानशब्दवत् टादौ पुवत् । सर्व सर्वे सर्वाणि । इत्यादि । टादौ । सर्वेण सर्वाभ्या सर्वै । इत्यादि नेतव्यम् ॥ अन्यशब्दात् स्वादय ॥

**२१३ पञ्चतोऽनेकतरस्यान्यादेर्दक् स्वमो**[3] ।१।२।२। नपोऽ-

---

१ तत्सम्बन्धीति विनानादिह न भवति प्रियोपवधु प्रत्युपवधु ॥ योगविभाग उत्तराथ । अत इति किं अधिश्रि ॥

२ अमित्ययमादेशा भवति । उपकुम्भ तिष्ठति । उपकुम्भ पश्यति ॥

३ पञ्च मानमस्येति पञ्चन् तस्य पञ्चतोऽन्यादे । अन्य, अन्यतर, इतर, डतर डतमेति पञ्च । अत्र अन्यादयस्तिस्र प्रकृतय । डतरडतमप्रत्ययान्ता द्वौ शब्दौ एत पञ्च । के ते? अन्य, अन्यतर, इतर, कतर कतम यतर, यतम ततर ततम अन्यान्यतरता। डतरडतमप्रत्ययान्तौ च अन्यादिपञ्च ज्ञातव्या सर्वा न्नेनानन ॥

न्यादिपञ्चकस्य दगभवति स्वम्वमो परत नैकतरस्य ॥ अकावितौ। अकार उच्चरणार्थ । ककारोऽन्त्यविध्यर्थ ॥

२१४ श्लुक् ।१।२।५। नप स्वमो श्लुम्भवति ॥ शित्त्वात्सर्वस्य। चर्जेश इति वा चर्त्वं। शेष पुर्ववत्। अन्यत अन्यद् अन्ये अन्यानि। हे अन्यत् हे अन्यद् हे अन्ये हे अन्यानि। अन्यत् अन्यद् अन्ये अन्यानि। टादौ पुवत् ॥ एवमन्यतरइतरकतरकतमादय । अनेकतरस्येति निषेधात् "कतर"शब्दस्य सर्वशब्दवद्रूप नेयम्। एकतरम् एकतरे एकतराणि। इत्यादि ॥ एवमन्यतमशब्दस्यापि ॥ अन्यादिपञ्चके अन्यतरशब्दग्रहणात् दगभाव । अन्यतमम् अन्यतमे अन्यतमानि ॥ तद्शब्दात् स्वादय । नित्यत्वात्प्रागेव स्वमो श्लुचि सत्या स्थानिवद्भावे प्राप्ते ॥

२१५ श्लुचीगेनत ।१।१।५२। परस्य श्लुचि सत्या पूर्वकार्यमिगेनदिति द्वयमेव भवति ॥ नान्यदिति नियमान्नात्वादि। अन्यत्रात्वाश्लुचौ। सर्वकार्ये कृते पश्चात्मत्वगुत्वे। टादौ पुवत्। अद अमू अमूनि। अमन्त्रणद्वितीययोरप्येवम्। अमुना अमूभ्याम् अमीभि । इत्यादि ॥ इदम स्वमो श्लुगादि शेष पूर्ववत्। इदम् इमे इमानि। टादौ पुवत्। अनेन आभ्याम् एभि । इत्यादि ॥ एतद्शब्दस्याप्येवम्। एतत् एतद् एते एतानि । इत्यादि ॥ अन्वादेशे अम श्लुच्यपि श्लुचीगेनदिति वचनादेनद्भवति। शेष पूर्ववत्। एनत् एनद् एने एनानि इत्यादि ॥ एकशब्दस्य। एकम् एके एकानि। इत्यादि ॥ द्विशब्दस्यात्वप्यादि। द्वे द्वे द्वाभ्याम् इत्यादि ॥ किशब्दस्य स्वमो श्लुचि कादेशो न भवति। अन्यत्र कादेशे प्यादि सर्वशब्दवत्। किं के कानि। इत्यादि ॥ आकारान्त सोमपाशब्द तस्य ॥

२१६ नपोऽचो ह्रस्व[1] ।१।२।१। अजन्तस्य नपुंसकस्य ह्रस्वो

---

१ अत्र उणादिप्रत्ययतोऽन्यतरशब्दो न डतरप्रत्ययान्त ॥

२ विशेषण विशेषस्य समुदायस्यान्तो भवतीति चिन्तामणावुक्तत्वादजन्तस्येत्यापन्न तेन ग्रामणि कुलमिति ॥

भवतीति ह्रस्व ॥ तत स्यादय । ज्ञानशब्दवत्प्रक्रिया । सोमप सोमपे सोमपानि । इत्यादि ॥ इकारान्तो वारिशब्द । तत स्यादय । सो लुक् आतो ङीन्वे । "इको लुक् ।२१८" इत्यधिकृत्य ॥

२१७ नम् स्वुपि ।१।२।१०। इगन्तस्य नपो नम् भवति अजादौ स्यसुपि परे ॥ अमावितौ पूर्ववत । अनप्सुटि इति निषेधात् न्यागिति न दीर्घ । णत्व । जस शौ नमादि । एकामन्त्रणे सो लुचि ॥ ' जरसो वा ।१।२।६। " इत्यधिकृत्य ॥

२१८ इको लुक् ।१।२।७। इगन्तस्य नप स्वमो लुक् लुग्वद्वा भवति ॥ लुचि ह्रस्वेत इत्येद् न लुचि । अम लुचि शेष प्राग्वत् । टादावजादौ नम् । आमो नम्ह्रस्वादसाट इति ना । सिद्धलीति पदत्वे' न 'इति नलुक् दीर्घ । वारि वारिणी वारीणि । हे वारे हे वारि हेवारिणी हे वारीणि । वारि वारिणी वारीणि । वारिणा वारिभ्या वारिभि । वारिणे वारिभ्या वारिभ्य । वारिण वारिभ्या वारिभ्य । वारिण वारिणो वारीणा । वारिणि वारिणो वारिषु ॥ अधिस्त्रिशब्दात् स्यादय । तस्याव्ययीभावत्वादव्ययीभावस्येति सुप लुक् । अधिस्त्रि अधिस्त्रि अधिस्त्रि । इत्यादि ॥ दध्यस्थिसक्थ्यक्षिशब्दाना प्रथमाद्वितीययोर्वारिशब्दवत् । टादौ ॥

२१९ दध्यस्थिसक्थ्यक्ष्णोऽनङ् ।१।२।७। दधि अस्थि सक्थि

---

१ सुपीति किं? तौम्बुरव चूर्णम् । स्वमव्यवधानादिह न भवति बहुवारी निवारी क्प । प्रक्रियाया इगन्तस्येति किं? काण्ड कुड्ये । नपुसकस्येति किं? मुनी साधू ॥

२ जरसन्तस्य नप स्वमो लुग्भवति वा ॥ अतिजर । अतिजरस कुल ॥

३ प्रक्रियाया लुग्वा लुग्वचन अम सवर्णपाधम् । स्वमोर्लुग्भवतीत्यनुक्त्वा लुक् लुग्वद्वा भवतीति वचनात् सवाम् लुप्यते । अन्यथा मकार एव लुप्येतत्यथ । इगन्तस्येति किं? यत्कुल तत्कुलम् ॥

४ अयमनङादेशस्तत्सम्बन्धिन्यन्यसम्बन्धिन्यपि अजादावापि परे नित्य भवति ॥ परमदध्ना । परमास्थ्ना । प्रियाक्ष्णा पुरुषेण ॥ अतिदध्ना स्त्रिया ॥ नप्यस्य योगस्यो शरस्त्रानुवृत्तसम्प्रत्यया अनङ् भवति । आपीति किं? दधिनि । नपुसकस्येति किं? दधिना दध्ये । दधिनाम कश्चिद्दानशीलो वा दधी दाने धातु ॥

अक्षि इत्येतेषां नपामनङ् भवत्यजादावपि परे ॥ अङावितौ । अनुच्चारणार्थं । इकारोऽन्त्यादेशार्थं । आदेशः । दधि दधिनी दधीनि । इत्यादि । दध्ना दधिभ्यां दधिभिः । दध्ने दधिभ्यां दधिभ्यः । दध्नः दधिभ्यां दधिभ्यः । दध्नः दध्नोः दध्नां । दध्नि दधनि दध्नोः दधिषु । एवमस्थिसक्थ्यक्षिशब्दाः ॥ त्रिशब्दात् जश्शसोः शौ नमादि । अन्यत्र पुंवत् । त्रीणि त्रीणि त्रिभिरित्यादि ॥ शुचिशब्दस्य प्रथमाद्वितीययोः वारिशब्दवत् । टादौ ॥

**२२० पुंवद्गालवस्यान्यतोऽच्यपि** ।१।२।८। यदिगन्तमन्यतो विशेष्यवशान्नपि वर्तते तत्पुनद्वा भवति अजादावपि परे ॥ पुंवद्भावे रविशब्दवत्प्रक्रिया । नत्वे नपुंसकत्वे वारिशब्दवत् । शुचि शुचिनी शुचीनि । इत्यादि । शुचिना शुचिभ्यां शुचिभिः । शुचिने शुचये शुचिभ्यां शुचिभ्यः । शुचिनः शुचेः शुचिभ्यां शुचिभ्यः । शुचिनः शुचेः शुचिनोः शुच्योः शुचीनां । शुचिनि शुचौ शुचिनोः शुच्योः शुचिषु ॥ एवं सखिपत्यादयः आश्रयलिङ्गाः ॥ ईकारान्तस्य ग्रामणीशब्दस्य नत्वे 'नपोऽचो ह्रस्वः' इति ह्रस्वे शुचिशब्दवत् रूपं नेयं ॥ ग्रामणि ग्रामणिनी ग्रामणीनि । इत्यादि । टादौ नम्ह्रस्वौ वा न भवतः । ग्रामण्या ग्रामणिना ग्रामणिभ्यां ग्रामणिभिः । ग्रामण्ये ग्रामणिने इत्यादि ॥ उकारान्तत्रपुशब्दः वारिशब्दवत् । त्रपु त्रपुणी त्रपूणि । इत्यादि ॥ एवं तालुजानुकशेरुप्रभृतयः ॥ उपवधुशब्दात् स्वादयः । अव्ययीभावस्येति सुपः श्लुक् । उपवधु उपवधु उपवधु । इत्यादि ॥ मृदुपटुगुरुलघुप्रभृतीनामाश्रयलिङ्गानां शुचिशब्दवत् प्रक्रिया । मृदु मृदुनी मृदूनि । इत्यादि ॥ ऊकारान्तस्य खलपूशब्दस्य ह्रस्वे कृते ग्रामणिशब्दवत् । खलपु खलपुनी खलपूनि । इत्यादि ॥ ऋकारान्तस्य कर्तृशब्दस्याश्रयलिङ्गत्वात् शुचिशब्दवत् । कर्तृ कर्तृणी कर्तॄणि । इत्यादि ॥ एवं नेतृभर्त्रादयः । उपकर्तृशब्दात् स्वादयः अव्ययीभावस्येति सुपः श्लुक् । उपकर्तृ

१ अस्मिन् सूत्रे चकारेण वाऽनुवर्तनमुत्तरत्राविकल्पार्थम् । 'जरसो वा' इत्यतो वा इति 'इको लुक्' इत्यत इकः इति च चकारः समुच्चिनोति । अत समुच्चयार्थश्चकारोऽत्र ।
२ वेति विकल्पे । तत्र पुंस्त्वे नम्ह्रस्वौ न भवतः इत्यर्थः ॥

उपकर्तृ । इत्यादि ॥ ऋकारलृकारलॄकारान्ता अप्रसिद्धा ॥ एकारान्त परमेशब्द । तस्य ह्रस्व आसन्न इति इकार । ग्रामणिशब्दवत् प्रक्रिया । परमि परमिणी परमीणि ॥ टादौ । परमिणा परमया परमिभ्यां परमिभि । इत्यादि ॥ ओकारान्त अतिद्योशब्द । ततः स्यादय । ह्रस्वादि । अतिद्यु अतिद्युनी अतिद्यूनि ॥ टादावजादौ वा पुंवद्भाव । अतिद्युना अतिद्यवा ॥ अतिद्युने अतिद्यवे ॥ अतिद्युन अतिद्यो ॥ अतिद्युन अतिद्यो अतिद्युनो अतिद्यवो अतिद्यूनाम् अतिद्यवाम् ॥ अतिद्युनि अतिद्यवि अतिद्युनोः अतिद्यवोः अतिद्युषु ॥ ऐकारान्त अतिरैशब्द तस्य ह्रस्वे । अतिरि अतिरिणी अतिरीणि । टादौ । अतिरिणा अतिराया । हलादौ एकदेशविकृतमनन्यवद्भवति इति न्यायेन रायस्भीस्यात् अतिराभ्यामित्यादि ॥ औकारान्त अतिनौशब्द । तस्य ह्रस्वे । अतिनु अतिनुनी अतिनूनि । टादौ । अतिनुना अतिनावा अतिनुभ्याम् अतिनुभि । इत्यादि ॥ ॥ इत्यजन्ता नपुंसकलिङ्गा ॥

## ॥ अथ हलन्ता पुल्लिङ्गा कथ्यन्ते ॥

तत्र हकारान्तो गुडलिह् शब्द । ततः स्यादय । हल्ड्याडिति सोर्लुक्। “इगो लिलुडाघोढ ।१।२।८१।” इत्यधिकृत्य ॥

२२१ हः ।१।२।८३। हस्य ढो भवति पदान्ते जलि च प्रत्यये परे ॥ जश्त्वचर्त्वे । अजादौ सन्निकर्ष । सुपि चर्त्वे । गुडलिट् गुडलिड् गुडलिहौ गुडलिह । इत्यादि । गुडलिट्सु गुडलिट्त्सु ॥ एवं मधुलिह् परीषह् इत्यादय ॥ गोदुह्शब्दात् स्यादय । सुलुक् ॥

२२२ दादेरेधादेर्घः[2] ।१।२।८४। दकारादेरेधादेर्धातोर्हस्य घो

---

१ इग परेषा लिड्लिट्गुडा घस्य ढकारो भवति, चकृत्वे ॥

२ एधादेरिति शब्दो धातोरित्यस्याध्याहारार्थ । आदिशब्दस्य प्रकारोऽर्थ । ततश्च एधादेर्धातोर्यो धकारादिरवयवस्तस्य हकारस्य पदान्ते जलि च प्रत्यये परे घकारादेशो भवति ॥ अस्मिन्सूत्रे घविधानं भष्भावार्थम् । दादेरिति किं? गुडलिहौ । एधादेरिति किं? दामलिट् । ह इति किं? दृष्ट ॥

भवति पदान्ते जलि च प्रत्यये परे ॥

**२२३ बशो भष् झषः स्ध्वोश्चैकाचः प्रत्यये** ।१।२।७६। झषन्तस्यैकाचोऽवयवस्य बशो भष् भवति पदान्ते सादौ ध्वादौ च प्रत्यये परे॥ आसन्न । जश्त्वचर्त्वे । सुपि चर्त्वपत्वे । गोधुक् गोधुग् गोदुहौ गोदुह । आमन्त्र्येऽप्येव । गोदुह गोदुहौ गोदुह । गोदुहा गोधुग्भ्या गोधुग्भि । गोदुहे गोधुग्भ्या गोधुग्भ्य । गोदुह गोधुग्भ्या गोधुग्भ्य । गोदुह गोदुहो गोदुहा । गोदुहि गोदुहो गोधुक्षु ॥ एव रत्नदुह्-कामदुह्गुणदुहादय ॥ मित्रद्रुह्शब्दात् स्वादय ॥

**२२४ द्रुह्मुहस्नुहस्निहो वा** ।१।२।८६। द्रुहादीना हस्य घो वा भवति पदान्ते जलि च परे ॥ पक्षे ढ, शेष प्राग्वत् । मित्रध्रुक् मित्रध्रुग् मित्रध्रुट् मित्रध्रुड् मित्रद्रुहौ मित्रद्रुह ॥ एव मुहमस्नुहप्रस्निह्-शब्दा ॥ अनडुह्शब्दात् स्वादय ॥

**२२५ वाः** ।१।२।१२८। अनडुह्चतुरशब्दयोरुतो वा इत्यादेशो भवति श्यनप्सुटि परे ॥

**२२६ अनडुहो नम्** ।१।२।११३। अनडुह सौ परे नम् भवति॥ अमावितौ । मित्त्वादन्त्यादच परो भवति सुलुक् । पदस्येति हस्य लुक् । न इति नलुचि परविधौ कर्तव्ये ॥

**२२७ परे** ।१।२।४९। परे कार्ये कर्तव्ये पूर्वमसद्भवति । इति पदस्ये स्यन्तलुचोऽसत्त्वान्न नलुक् । अय न्यायो धर्मानित्यादावपि द्रष्टव्य । एकामन्त्रणे ॥

**२२८ वोऽनडुच्चतुरोः** ।१।२।१२७। अनडुह्चतुरोरुतो वो भवति

---

१ अत्र ध्वग्रहणोपादानादिह न भवति दादृ्धि । एकाच इति किं धामलिट् । प्रत्यये इति किं दध्य । चकार समुच्चयार्थ ॥

२ द्रुह जिघांसायाम् । मुह वैचित्ये । स्नुह उद्गिरणे । स्निह प्रीतौ ॥

३ आड्डुष चतुर्च अनडुच्चतुरौ । तयो उ अनडुच्चतुरु । तस्य अनडुच्चतुरो । हे प्रियचच । हे अतिचच इत्यादि ॥

षकाम तणे ॥ नम् । सुलुगन्तलुचौ । हलादौ ॥

**२२९ अनडुद्द्युष्णिग्दिग्दृक्स्पृग्दृघृन्परिव्राट्** ।१।२।७०। अनडुह् दिव् उष्णिह् दिश् दृश् स्पृश् दधृष् परिव्राज् इत्येते शब्दा पदान्ते कृतदरजोत्वगत्वडत्वा निपात्यन्ते ॥ अनड्वान् अनड्वाहौ अनड्वाह । हे अनड्वन् हे अनड्वाहौ हे अनड्वाह । अनड्वाह अनड्वाहौ अनडुह । अनडुहा अनडुद्भ्याम् अनडुद्भि । अनडुहे अनडुद्भ्याम् अनडुद्भ्य । अनडुह अनडुद्भ्याम् अनडुद्भ्य । अनडुह अनडुहो अनडुहाम् । अनडुहि अनडुहो अनडुत्सु ॥ यकारान्तोऽप्रसिद्ध ॥ वकारात सुदिव्शब्द ॥

**२३० द्यौः** ।१।२।११२। दिव सौ द्यौरिति निपात्यते ॥ अचि सन्निकर्षे आमन्त्र्येऽप्येव । हलादौ अनडुदिति निपातनात् दिवो द्युभाव । सुद्यौ सुदिवौ सुदिव । हे सुद्यौ हे सुदिवौ हे सुदिव । सुदिव सुदिवौ सुदिव । सुदिवा सुद्युभ्या सुद्युभि । सुदिवे सुद्युभ्या सुद्युभ्य । सुदिव सुद्युभ्या सुद्युभ्य । सुदिव सुदिवो सुदिवा । सुदिवि सुदिवो सुद्युषु ॥ रेफान्त सुवाश्शब्द । तत स्वादय । सुलुचि रस्य विसर्जनीय । हपि विसर्जनीयस्य र । सुपि ॥

**२३१ रस्सुप्सि** ।१।२।७४। रस्य रिर्भवति सुप से परे ॥ इदित्

---

१ अनडुहश दस्य दत्व दिव्शब्दस्य उत्व उष्णिहादानां गत्व परिव्राज्शब्दस्य दत्व च निपात्यते ॥

२ यकारात समय्शब्द । समय् समयौ समय । वलादौ व्योऽप्यति यलुक् समभ्याम् ॥

३ दिव् इत्यव्युत्पन्नस्य प्रातिपदिकस्य तत्सम्बन्धिप्रत्ययसम्बन्धिनि वा सकारादौ श्यन प्सुटि परे ओकारो निपात्यते । द्यौ । हे द्यौ । प्रियद्यौ । अतिद्यौ । अधादक्रियाशब्दस्याव्युत्पन्नस्य निपातनादक्षद्युरित्यत्र न भवति ॥

४ र इति किं? भित्सु अहस्सु पयस्सु इत्यत्र रेरसत्त्वान्न भवति ॥ सुप इति किं? गीस्सुनोति धूस्सुनाति । स इति किं? गी धू । इदमेव ज्ञापक सुप्ग्रहणे प्रत्याहारग्रहण मवलम्ब्य । रेफस्य रिवचन विसर्जनीयबाधनार्थम् ॥

विसर्जनीयापवाद । सुवा सुवारौ सुवार । हे सुवा हे सुवारौ हे सुवार । सुवार सुवारौ सुवार । सवारा सुवार्भ्यां सुवार्भि । सुवारे सुवार्भ्यां सुवार्भ्य सुवार सुवार्भ्यां सुवार्भ्य । सुवार सुवारो सुवारा । सुवारि सुवारो सुवार्षु ॥ एव सुद्वारादय ॥ चतुरशब्दस्य बह्वर्थवाचित्वाउतो जसादय । जस्युतो वा ॥

**२३२ रष्णां सङ्ख्यानाम्** ।१।२।३४। रषनान्ताना सङ्ख्यावाचिना सम्बन्धिन आमो ना भवति ॥ अतिसृचतुष्प इति निषेधात् न दीर्घं णत्व। सुपि रि । चत्वार । हे चत्वार । चतुर । चतुर्भि । चतुर्भ्य । चतुर्भ्य । चतुर्णां । चतुर्षु ॥ लकारजकारान्तावप्रसिद्धौ ॥ मकारान्त प्रदाम्शब्द । तत स्वादय सुलुक् ॥

**२३३ म्वोश्च मो नि:** ।१।२।६९। मकारान्तस्य धातोर्नकारो भवति पदान्ते मवयोश्च परत ॥ सुपि ॥

**२३४ ङ्नस्तद् सोऽश्चे** ।१।१।१४६। पदान्ते ङनाभ्यां परस्य सस्य तड्वा भवति न श्च सयोगस्य ॥ ट इत् आदिनिव्यर्थे । अदुच्चारणार्थे प्रदान् प्रदामौ प्रदाम । हे प्रदान् हे प्रदामौ हे प्रदाम । प्रदाम प्रदामौ प्रदाम । प्रदमा प्रदान्भ्यां प्रदान्भि । प्रदामे प्रदान्भ्यां प्रदान्भ्य । प्रदाम प्रदान्भ्यां प्रदान्भ्य । प्रदाम प्रदामो प्रदामा । प्रदामि प्रदामो प्रदान्त्सु प्रदान्सु ॥ एव प्रताम्प्रकाम्प्रशामादय ॥ ङकारातोऽप्रसिद्ध ॥

---

२ रष्णामिति किं? त्रिंशताम् चत्वारिंशताम् । रष्णामिति बहुवचन षष्ठ्यभिव्यक्त्यर्थम् । तेन तत्सम्बन्धिन एव भवति नान्यसम्बन्धिन ॥

२ अश्च असयोगस्यावयवश्चेत्सकारो न भवति । अश्च इति किं? अद्श्योतति पद्श्योतति। श्चुतृ क्षरणे । भवाञ्श्योतति ॥ नन्वत्र सकार एव नास्ति किं अश्च इति निषेधेनेति चेत् तत्रान्तरङ्गत्वाद्यद्यपि श्चुत्वेन शकारो भवति तथापि तस्य सकारोपदेशसामर्थ्यात्सकारोपस्थिति विज्ञायते । अन्यथा सकारोपदेशानर्थक्यात् ।

णकारान्त सुगण्शब्द । तत स्यादय । सुलुगादि । सुपि ॥

२३५ ङ्णो गरुडक् शरि ।१।१।१४५। पदान्ते ङणयोर्यथासङ्ख्य गक्डकौ वा भवत शरि परे ॥ अकावितौ अनुच्चारणार्थं । कोऽन्तवि द्धचर्थ । चर्त्व । टो पदान्त इत्यनेन ष्टुत्वनिषेध । सुगण् सुगणौ सुगण । इत्यादि । सुगण्ट्सु सुगण्सु ॥ एव सुरण्सुभण्विष्वण्णादय ॥ नकारा न्तात् राजन्शब्दात् स्यादय सुट्टक् । न्यगिति दीर्घ । न इति नलुक् । एकामन्त्रणे सुलुचि ' न ङान्लुगिति ' वचनात् न नलुक् । शसादावजादौ ' श्नोऽन ' इति श्न । श्चुत्वेन नस्य ञ । हलादौ पदत्वेन नलुक् । तस्या ' न्लुक्सुबाश्रये ' इत्यसत्वान्नात्वादि । ङौ वा श्न । शेष पूर्ववत् । राजा राजानौ राजान । हे राजन् हे राजानौ हे राजान । राजान राजानौ राज्ञ । राज्ञा राजभ्या राजभि । राज्ञे राजभ्या राजभ्य । राज्ञ राजभ्या राजभ्य । राज्ञ राज्ञो राज्ञा । राज्ञि राज्ञो राजसु ॥ एव मूर्धन्उक्षन्त क्षन्प्रभृतय ॥ दिवन्शब्दस्य सुटि राजन्शब्दवत् । असुटि श्ने ॥

२३६ धातोर्म्रीग्दीर्घोऽयट्ल्नि चाच्छुर्कुरो: ।१।२।६८। छुर्कुरुवर्जितस्य धातोरिग्दीर्घो भवति पदान्ते यमत्ययनर्जितहल्परयो नपरयोश्च चकाररेफयो परत ॥ शेष सुगमम् । दिवा दिवानौ दिवान । इत्यादि दीव्न । दीव्ना दिवभ्या दिवभि । इत्यादि ॥ सुपर्वन्शब्दात् स्यादय । राजन् शब्दवत् । इयास्तु भेद अहत्वमादिति निषेधान्न श्न । सुपर्वा सुपर्वाणौ सुपर्वाण । इत्यादि । शसादौ सुपर्वण । सुपर्वणा इत्यादि । एव सुश र्मन्श्रीवर्मन्नित्यादय ॥ पूषन्शब्दात् स्यादय ॥

२३७ इन्हन्पूषार्यम्ण: शौ ।१।२।१२६। इन् हन् पूषन् अर्य मन् इत्येतेषा शावेव परे पूर्वोऽदीर्घो भवति ॥ इति नियमादत्र दीर्घेऽप्राप्ते ॥

२३८ सावतोश्च १।२।१२७ अत्वन्तस्य इन्हन्पूषार्यम्णा च दीर्घो भवति सौ परे न चैकामन्त्रणे ॥ णत्व शेष प्राग्वत् । पूषा पूषणौ पूषण । इत्यादि ॥ एवमर्यमन्शब्द ॥ ब्रह्महन्शब्दात् स्यादय पूषन्श-

ऱ्ववत् प्रक्रिया। "पूर्वपदस्थाद्वान्तनम्सुप ।१।२।५७।" इत्यधिकृत्य ॥

**२३९ संकेकाचोः** ।१।२।५८। पूर्वपदस्थाभ्या षूभ्या परस्य कवर्गवत एकाचश्चोत्तरपदस्यान्तनम्सुपा नस्य णो भवति ॥ असुटि श्वे "दादेरेधादेर्घ ।२२२" इत्यधिकृत्य ॥

**२४० नि घ्नः** ।१।२।८५। हनो हस्य घो भवति नकारे परे ॥

**२४१ घि घ्नः** ।१।२।५२। हनो हस्य घे सति नस्य णो न भवति ॥ शेष प्राग्वत् । ब्रह्महा ब्रह्महणौ ब्रह्महण । हे ब्रह्महन् ॥ ब्रह्मघ्न ॥ ब्रह्मघ्ना ब्रह्महभ्या ब्रह्महभि । इत्यादि ॥ एव भ्रूणहन्वृत्रहन्शब्दौ ॥ करिन्शब्दात् स्वादय पूषन्शब्दवत्प्रक्रिया। करी करिणौ करिण । इत्यादि ॥ एव हस्तिन्दन्तिन्दण्डिन्प्रभृतय ॥ श्वन्शब्दात् स्वादय सुटि राजन्शब्दवत्। असुट्यजादौ ॥

**२४२ श्वयुवन्मघोनां वस्येसुप्युश्** ।१।२।१४८। श्वन्युवन्मघवन् इत्येतेषा अपदान्ताना वशब्दस्योश् भवति सुट्छिण्यादिवर्जिते ईप्रत्यये स्या च सुपि प्रत्यये च परत ॥ श इत् सर्वादेशार्थ शेष प्राग्वत् ॥ श्वा श्वानौ श्वान । इत्यादि । शुन ॥ शुना श्वभ्या श्वभि । इत्यादि ॥ एव,

---

१ पूर्वपदस्थात्पूात्परो य उत्तरपदस्यान्तो यश्च नम् यश्च सुबवयवो नकार तस्य वा णो भवति ॥ माषवापिणौ । माषवापिनौ । व्रीहिवापिणौ व्राहिवापिनौ । नम् माषवापाणि माषवापानि । प्रहिण्वन् प्रहिण्वन् । सुप् माषवापेण माषवापेन । व्रीहिवापेन व्राहिवापेण । पूर्वपदस्थादिति किं? कूरवारेणा । अन्तनम्सुपामिति किं? गर्गाणो भगिनी गगभगिनी ॥

२ सह कु कवर्गो येन तत्सकु । एकोऽच् यस्यास्ति न द्वितीय इति तदेकाच् सकु च एकाच् च सकुकाचे तयो । तथाच पूर्वपदस्थानिमित्तादुत्तरस्य कवर्गवत्येकाचि चोत्तरपदे तदन्तस्य नम् सुबवयवस्य च नकारस्य च नित्य णकारो भवति ॥ कवर्गवतोऽन्त नम्सुपाम् मोक्षगामिणौ स्वर्गकामाणां पुष्पमेघाणां ॥

३ युवन्निति नकारोच्चारण नकारान्तप्रत्ययार्थम् तेनेह न भवति । युवती पश्य । युवत्या युवत्यै । प्रातिपदिकग्रहण लिङ्गविशिष्टस्यापि प्राप्नोति । तत्रवद्वना इत्यत्र तु अर्थवद्ग्रहणान्न भवतीत्यमोघवृत्तौ ॥

सुधाशब्दवन्मघुसुधि दीर्घं । शुना शुनौ शुना । इत्यादि । शुन । शुना शुनभ्यां शुनभि । शुने शुनभ्यां शुनभ्य । इत्यादि ॥ एवं मघवन्शब्द स्यानुटनुस्वेर् । मघवा मघवानौ मघवान । इत्यादि । मघोन । मघोना मघवभ्यां मघवभि इत्यादि ॥ पथिन्शब्दात् स्यादय ॥

२८३ इयनप्लुटयन् ।१।२।१००। पथिन मथिन् ऋभुक्षिन् इत्येते षा अन्त्यानादेरन् भवति शावनपुंसकीये च सुटि परे ॥

२८४ थो न्द ।१।२।११०। पथ्यादीना थकारस्य न्द् भवति इयन प्सुटि परे ॥ अटाविनौ अनुच्चारणार्थौ । ट आदिविध्यर्थं । सौ ॥

२८५ ओस्स्यन ।१।२।१११। पथ्यादीनामन आद्भवति सौ परे । अनाश्रय इति निषेधान् हल्ङ्याडिति सुलुचि प्राप्ताया न स्थानिवद्भाव । रित्यादि । अन्यत्र न्यगिति दीर्घ । अशादावसुटि ॥

२८६ न पथिमथ्यृभुक्षा ।१।२।१०८। नान्तानामपदान्तानां पथ्यादीनामन्त्याजादेर्लुग्भवति ॥ हलि पदत्वादन्त्याजादेर्लुक् पुनर्न इति नलुक् । पन्था पन्थानौ पन्थान । हे पन्था हे पन्थानौ हे पन्थान पन्थान पन्थानौ पथ । पथा पथिभ्यां पथिभि । पथे पथिभ्यां पथिभ्य पथ पथिभ्यां पथिभ्य । पथ पथो पथां । पथि पथो पथिषु ॥ एवं मथिन्ऋभुक्षिन्शब्दौ ॥ मन्था मन्थानौ मन्थान । ऋभुक्षा ऋभुक्षाणौ

---

१ अन इति षष्ठ्यास्स्थानेऽन्तऽत्र । सकारादौ स्यप्सुटि परे अनस्स्थाने आकारा देशो भवति । सौति किं पन्थानौ । अन इति किं थकारस्य माभूत् सकारादौ स्यन्सु टीति वचनसामर्थ्यात्प्राक् सोर्लुक् न भवति ॥

२ पथिन् स् इत्यत्र स्यनप्सुट्यभित्यनि सति पथन् स् इति भवति । थो नडिति नडागमे सति पन्थन् स् इति भवति । ओस्स्यन इति अन आकारे कृते पन्थास् इति भवति । अत्र ओस्स्यन इति विहितस्याकारस्य स्थानीभूतस्य नकारस्य पथन् स इति स्थानिवद्भावं कृत्वा हल परलक्षणायां सोर्लुचि स्थानिवद्भावाभावान्न भवति ॥ अथवा पथन् स् इत्यत्र प्रथम सोर्लोपं कृत्वा पश्चात्सौ स्थानिवद्भाव कृत्वा ओस्स्यन इत्याकारो भवतीत्यारेकायां ओस्स्यन इति सकारहल्मात्रग्रहणात् तत्राप्यलाश्रयत्वात् स्थानिवद्भाव । अत एवोभयत्र सोर्लुक् न भवति ॥

ऋभुक्षाण । इत्यादि ॥ पञ्चन्शब्दस्य बहुत्ववाचित्वात्ततो बहुवचनान्येव । डतिष्णा सङ्ख्याया इति जश्शसो श्लुक् । श्लुचीगेनादिति नियमान्न दीर्घ । न इति नलुक् । आमो ष्णा सङ्ख्यानामिति नाम् न्लुक् दीर्घ । पञ्च । हे पञ्च । पञ्च । पञ्चभि । पञ्चभ्य । पञ्चभ्य । पञ्चाना । पञ्चसु ॥ त्रीन् सकयोरप्येवम् । एव सप्तन् नवन् दशन् एकादशन् इत्यादय ॥ अष्टन्शब्दात् जसादय ॥

२४७ वाऽष्ट आ' ।१।२।२१९। अष्टन्शब्दस्य आद्वा भवति सुपि परे ॥ एकाल्त्वादन्त्यस्य[1] दीर्घ ॥

२४८ अष्ट औश् ।१।२।१५३। अष्टाशब्दात्परयो जश्शसोरौश् भवति ॥ श इत् सर्वादेशार्थ । ऐच् पक्षे पञ्चन्शब्दवत् । अष्टौ अष्ट । हे अष्टौ हे अष्ट । अष्टौ अष्ट । अष्टाभि अष्टभि । इत्यादि । आमो नित्यत्वान्नामि पुनराकार अष्टानाम् । अष्टासु अष्टसु ॥ जकारान्तो भिषज्शब्द । तत स्वादय सुलुक् ॥

२४९ चो' कु' ।१।२।८८। चो कुर्भवति पदान्ते जलि च परे ॥ आसन्न इति घोषवतो जस्य तादृशो ग चर्त्वे च । सुपि कुत्वे षत्वे च कृते चर्त्वे च । भिषक् भिषग् भिषजौ भिषज । इत्यादि । भिषक्षु ॥ एव जन्म भाज् सुकृतभुज् इत्यादय ॥ युज्शब्दात् स्वादय ॥

२५० युञ्जोऽसमासे[2] ।१।२।११५। असमासे युज्र श्यनप्लुटि नम्भवति ॥ युज्यचीति नस्य ञ । अजादौ श्नुत्वेन ञ । युङ् युञ्जौ युञ्ज । इत्यादि ॥ समासे न नम् । वियुक् वियुग् वियुजौ वियुज । इत्यादि ॥ धानाभृज्ज्शब्दात् स्वादय ॥

---

१ अयमाश् सास्सम्बन्धिनोरेव भवतीति विज्ञायते । तेन प्रिया अष्टौ येषां ते प्रियाष्टानिष्टतीत्यत्र न भवति ॥

२ युजृन् योगे । ऋकारनिर्देशात् युजि समाधावित्यत्र न भवति । युञ्जमापन्ना । असमास इति किं? अश्वयुक् अश्वयुजौ अश्वयुज । श्यनप्लुटीति किं? युजौ पश्य । युञ्जी कुले ॥

**२५१ सयोगस्यादिस्कोर्लुक्** ।१।२।९१। सयोगस्याद्यो , सकयो र्लुग्भवति पदान्ते जलि च परे ॥ मस्चभ्रस्जेत्यादिना जस्य ष जस्त्वचर्त्वे। अजादौ श्चुत्वेन सस्य श पुनर्जश्त्व । धानाभृट् धानाभृड् धानाभृज्जौ धाना भृज्ज । इत्यादि । धानाभृड्भ्याम् धानाभृट्सु ॥ विश्वसृज्शब्दात् स्वादय मस्चभ्रस्जेत्यादिना जस्य ष । विश्वसृट् विश्वसृड् विश्वसृजौ विश्वसृज इत्यादि ॥ एव कसपरिमृज् देवेज् सम्राज् विभ्राज् इत्यादय ॥ परिव्राज्-शब्दात् स्वादय । अनडुदित्यादिना जस्य ड । चर्त्वे । परिव्राट् परिव्राड् परिव्राजौ परिव्राज । इत्यादि ॥ थगडान्ता अप्रसिद्धा ॥ दकारान्त सर्वविद्शब्द । तत स्वादय सुलुगादि सुगम ॥ सर्ववित् सर्वविद् सर्वविदौ सर्वविद । इत्यादि एव तत्त्वविद्वेदविदादय ॥ द्विपाद्शब्दात् स्वादय सुटि अविशेष । शसादावजादौ ॥

**२५२ पादोऽपदस्य न्यसुट्छिण्यादौ पद्** ।१।२।१४४।अ पदस्य पाद पद्भवति सुट्छिण्यादिवर्जिते प्रत्यये ण्या च परत ॥ चाद्धि ,पद-स्यान्न पद् । द्विपात द्विपाद् द्विपादौ द्विपाद । हे द्विपात् हे द्विपाद् हे द्विपादौ हे द्विपाद । द्विपाद द्विपादौ द्विपद । द्विपदा द्विपाद्भ्याम् द्विपाद्भि । इत्यादि ॥ एव सुपाद्चतुष्पादादय ॥ झकारान्तोऽप्रसिद्ध ॥ भकारान्तो गर्द-भ्शब्द । तत स्वादय । वशो भषिति दस्य ध शेष गाम्वत् । गर्धप् गर्धब् गर्दभौ गर्दभ । इत्यादि ॥ घढान्तावप्रसिद्धौ ॥ धकारान्त , सुबुध्श ब्द । तत स्वादय भषादि । सुभुत् सुभुद् सुबुधौ सुबुध । इत्यादि । एव तत्त्वबुध्विश्वबुध्प्रभृतय ॥ खफान्तावप्रसिद्धौ ॥ छकारान्त तत्त्वप्राच्छ्

१ यदि पदान्त जलि चेति विशेषण सयोगस्य न भवति तर्हि दध्रिरपातमित्यत्र प्राप्नोति । यदि आदिग्रहण न क्रियत तर्हि मावर्त्तीत्यत्र अन्तेऽपि प्राप्नोति ॥

२ गद शब्दे इति धातु । 'कृशृशलिकलिगर्दिभ्योऽभच्' इति शाकटायनीयोणादि सूत्रेण अभच्प्रत्यय इति सुबोधिन्यामुक्तम् ॥ ततो गर्दभ इवाचरतीति पश्चात् क्विपि सति अत इति सूत्रेणाकारस्य लुचि सति गर्दभ् इति स्यात् ॥ तथाच गदत्युच्चैरिति गर्दभ ॥

शब्द । तत स्वादय । मरचेत्यादिना छस' प । जश्त्वादि । अजादौ अजाञ्छाङ इति द्वित्व । तत्त्वमाट् तत्त्वमाड् तत्त्वमाच्छौ तत्त्वमाच्छ । इत्यादि ॥ ठकारान्तोऽप्रसिद्ध ॥ थकारान्त सूत्रमथशब्द तत स्वादय जश्त्वचर्त्वे । सूत्रमत् सूत्रमद् सूत्रमथौ सूत्रमथ । इत्यादि ॥ एव अग्निमथादय ॥ चकारान्त सुवाच्शब्द तत स्वादय कुत्वजश्त्वादि । सुवाक् सुवाग् सुवाचौ सुवाच इत्यादि ॥ एव वारिमुच्बहुसेच्प्रभृतय ॥ क्रुञ्चशब्दात्स्वादय सुलुगन्तलुचौ ॥

२६३ युज्यञ्चिक्रुञ्चः ।१।२।८९। युजअञ्च्क्रुञ्च् इत्येतेषा नस्य ङुर्भवति पदान्ते जलि च परे ॥ आसन्न इत्यनुनासिको ङ । अजादौ सुपि । म्रामित्यादिना नस्य ञ । सुपि ङणो गक् ङक् शरीति वा गक् । क्रुङ् क्रुञ्चौ क्रुञ्च । इत्यादि ॥ मूलवृश्च् शब्दात् स्वादय । सयोगस्येति सलुक् । मरचभ्रस्जेति चस्य प जश्त्वादि । अजादौ श्चुत्व । मूलवृट् मूलवृड् मूलवृश्चौ मूलवृश्च । इत्यादि ॥ एव वृक्षवृश्चादय ॥ प्राञ्च्शब्दात् स्वादय ॥

२६४ उगिदचोऽनेघादेः ।१।२।११४। उगितोऽञ्चतेश्च नम् भवति शावनप्सुटि परे नैधादे ॥ अमावितो । प्राञ्चत् सुलुगन्तलुचौ । युज्यञ्चेति नस्य ङ । अजादौ म्रामिति ञ । शसादावजादौ ॥

२६५ श्वोऽश्च ।१।२।१४१। पदान्तस्याच श्वादेशो भवति यसुट्झिप्यादौ परे ॥ शतावितौ श सर्वादेशार्थ अदुच्चारणार्थ ॥

२६६ श्वे ।१।२।१३९। श्वादेशे पूर्वोऽन्दीर्घो भवति ॥ सन्निकर्ष । हलादौ कुत्वजश्त्वे सुपि पत्वचर्त्वे । प्राङ् प्राञ्चौ प्राञ्च । हे प्राङ् हे प्रा-

१ अपदस्थञ्चत्यवयवो योऽञ्चतिर्लुप्तनकारस्तस्य श्च इत्ययमादेशो भवति ॥

२ योगविभाग उत्तरस्य निवृत्त्यर्थ । श्वोऽश इति च शकारानुबन्धश्वकारादशस्त स्मिन् परे पूर्वोऽन्दीर्घो भवति ॥ शकारानुबन्धापादानादिह न भवति अभिचित् ॥ अ कारस्तदभिव्यक्त्यर्थ । अन्यथा हि मधुश्चुतमाचष्टे इति मधुक् मधुश्चौ मधुश्च इत्यत्र स्यात् । श्वादेशे दीर्घश्च प्राञ्च इत्यादिशब्देषु योजनीय. । पञ्चम्यन्तत्वेनप्रतिपत्तिर्निर्देशे स्थले च गर्दा ॥

ञ्चौ हे प्राञ्च । प्राञ्च प्राञ्चौ प्राच । प्राचा प्राग्भ्या प्राग्भि । इत्यादि ॥ एवमपाञ्छब्द ॥ प्रत्यच्छब्दात् स्यादय प्राच्छब्दवत् प्रक्रिया । प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्च । हे प्रत्यङ् हे प्रत्यञ्चौ हे प्रत्यञ्च । प्रत्यञ्च प्रत्यञ्चौ प्रतीच । प्रतीचा प्रत्यग्भ्यां प्रत्यग्भि । प्रतीचे । इत्यादि ॥ उदञ्च्छब्दस्य सुत्वविशेष । असुध्यजादौ ॥

२५७ उद ई ।१।२।१४७। उद परस्यापदस्याञ्च आदेरीद्भवति स्यमुट्छिण्यादौ परे ॥ शेष प्राग्वत् । उदङ् उदञ्चौ उदञ्च । हे उदङ् हे उदञ्चौ हे उदञ्च । उदञ्चम् उदञ्चौ उदीच । उदीचा उदग्भ्याम् उदग्भि । इत्यादि ॥ देवद्र्यञ्च्छब्दात् स्यादय । देव अञ्च् इति स्थिते ॥

२५८ विष्वग्देवसर्वादेर्ड्रिगञ्चि क्कौ ।२।२।६५। विष्वग्देवशब्दयो सर्वादेश्च टद्रिर्भवति क्विन्तेऽञ्चि परे ॥ डकारितौ डोऽन्त्यादिलुगर्थ । क्कौ देशविध्यर्थं । पुनर्यण् । शेष प्राग्वत् । देवद्र्यङ् देवद्र्यञ्चौ देवद्र्यञ्च । हे देवद्र्यङ् हे देवद्र्यञ्चौ हे देवद्र्यञ्च । इत्यादि । असुटि । देवद्रीच । देवद्रीचा देवद्र्यग्भ्या देवद्र्यग्भि । इत्यादि ॥ एव विष्वद्र्यङ्सर्वद्र्यञ्चुतद्र्यञ्चुयद्र्यञ्च्प्रभृतय ॥ अदद्र्यञ्च्छब्दस्य ॥

२५९ वाऽद्रे. ।१।२।४५। अद्र्यन्तस्यादसो दस्य मो वा यथासम्भव भवति ॥ माद्वाले गु । स च पिनाम्यामन्यस्मिन्नसानिति यत्नादौ कृते पुनर्गु । अदमुयङ् अदमुयञ्चौ अदमुयञ्च । हे अदमुयङ् हे अदमुयञ्चौ हे अदमुयञ्च । अदमुयञ्च अदमुयञ्चो । असुटि श्वे दीर्घे च कृते गोर्गित्वात् यत्नोऽभावे प्रकृतिभाव एव । अदमुईच । अदमुईचा अदमुयग्भ्याम् अदमुयग्भि । इत्यादि ॥ एवम् अमुमुयञ्च्छब्द ॥ अमुद्र्यञ्च्छब्दस्य । अमुद्र्यङ् अमुद्र्यञ्चौ अमुद्र्यञ्च । हे अमुद्र्यङ् हे अमुद्र्यञ्चौ हे अमुद्र्यञ्च । अमुद्र्यञ्चम् अमुद्र्यञ्चौ । असुटि श्वे दीर्घे । अमुद्रीच । अमुद्रीचा अमुद्र्यग्भ्याम् अमुद्र्यग्भि । इत्यादि ॥ एवम् अदद्र्यञ्च्छब्द ॥ सम्यञ्च् महाञ्च् इति स्थिते ॥

**२६० समसहस्य समिसध्रि** ।२।२।६६। समसहशब्दयो समि सध्रि इत्यादेशौ क्रमेण भवत क्विन्ते अञ्चि परे ॥ यञ् तन स्वादय प्राच्शब्दवत् प्रक्रिया ।सम्यङ् सम्यञ्चौ सम्यञ्च । इत्यादि ॥ एव सध्र्य-ञ्शब्द ॥ तिरस् अच् इति स्थिते ॥

**२६१ तिरसस्तिर्ये** ।२।२।६७। तिर शब्दस्य तिरिर्भवति अञ्चे-रति परत ॥ तत स्वादय । तिर्यङ् तिर्यञ्चौ तिर्यञ्च । इत्यादि ॥ असुटि श्वे अदभावान्न तिर्यादेश सस्य श्चुत्व । तिरश्च । तिरश्चा तिर्य-ग्भ्या तिर्यग्भि । इत्यादि ॥ टकारान्तोऽप्रसिद्ध ॥ तकारान्तो मरुच्छब्द तत स्वादय जश्त्वचर्त्वे । मरुत् मरद् मरुतौ मरुत । इत्यादि ॥ एव हरित्प्रभृतय ॥ भवतु इति स्थिते उदित् नमाद्यर्थं । तत स्वादय । सुटि उगिदचोऽनेधादेरिति नम् । सौ सावतोश्चेति दीर्घ मुलुगन्तलुचौ । एकामन्त्रणे ॥

**२६२ वोशनोशनन्नघोभगोभो'स्वमश्चैकामन्त्रणे** ।१।२।१२१ उशनस् अघवत् भगवत् भवत् इत्येतेषा एकामन्त्रणे उशन उशनन् अघोर् भगोर् भोरित्येते आदेशा क्रमेण वा निपात्यन्ते स्वमोश्च लुक् ॥ पक्षे मुल गन्तलुचौ । शेष सुगम । भवान् भवन्तौ भवन्त । हे भो हे भवन् हे भ-वन्तौ हे भवन्त । असुटि न नम् । भवत । भवता भवद्भ्या भवद्भि ॥ एवमघवतुभगवतुशब्दौ उदनुबन्धौ । गोमतुधनवतुशब्दादीनामुदनुबन्धाना । गोमान् गोमन्तौ गोमन्त । हे गोमन् । इत्यादि॥ धनवान् धनवन्तौ धनव-न्त । इत्यादि भवतुशब्दवत्प्रक्रिया ॥ शतन्ताद्भवत्शब्दात् स्वादय । ऋदित् नमाद्यर्थं । सुटि नम् । सावत्वन्तत्वाभावान्न दीर्घ । शेष प्राग्वत् भवन् भवन्तौ भवन्त । असुटि । भवत । भवता भवद्भ्या भवद्भि । इत्यादि॥ एव पचत्पतत्अदत्दीव्यत्सुन्वत्क्रीणत्नुदत्तन्वत्रुन्धत्चोरयित् योजयित्प्रभृतय शब्दा नेया ॥ महत्शब्दात् स्वादय । ऋदित् उगित्कार्यार्थं । नमादि ॥

---

१ सम्बोधने तूशनसस्त्रिरूप सान्त तथा नान्तमथाप्यदन्तम् ॥

**२६३ स्महतः** ।१।२।१३५। सान्तस्य महतश्च नकारे पूर्वोऽन्दीर्घो भवति स्यनप्सुटि परे न चैकामन्त्रणे ॥ शेष प्राग्वत्। महान् महान्तौ महान्त । हे महन् हे महान्तौ हे महान्त । महान्त महान्तौ महत । महता महद्भ्याम् इत्यादि ॥ ददतृशब्दात् स्वादय । ऋदित् उगिदच इति नमि प्राप्ते ॥

**२६४ न नम्** ।१।२।१५। द्विरुक्तस्य जक्षादिपञ्चकस्य च शसन्तस्य नम् न भवति ॥ ददत् ददतौ ददत । इत्यादि ॥ एव दधत्जुहृ-वृतोभवतृपापचतृजक्षतृजागृतृदारिद्रतृचकासतृशासतृप्रभृतय शब्दा ज्ञेया ॥ फकारान्तोऽप्रसिद्ध ॥ पकारान्त स्वप्शब्द तत स्वादय सुटि नश्च स्वित्यादिना दीर्घ । स्वाप् स्वापौ स्वाप । इत्यादि भादौ ' भेऽपोऽद् । २६९।" इत्यद् । स्वद्भ्या स्वद्भि । इत्यादि ॥ शकारान्तो विश्शब्द । तत स्वादय । भ्रश्चेत्यादिना शस्य ष जश्त्वादि शेष प्राग्वत् । विट् विड् विशौ विश । इत्यादि ॥ एव परिव्रश् आदयादय ॥ तादृक्शब्दात् स्वादय । अनडुदिति शस्य ग शेष सुगम । तादृक् तादृग् तादृशौ तादृश । इत्यादि ॥ एव यादृश्अमूदृश्एतादृश्ईदृश्एतादृश्त्वादृश्भवादृश्मादृश्कीदृश्अन्यादृश्सदृश्सुदृश्प्रभृतय शब्दा ज्ञेया ॥ तत्त्वदिश्शब्दात् स्वादय । अनडुदिति शस्य ग । तत्त्वदिक् तत्त्वदिग् तत्त्वदिशौ तत्त्वदिश । इत्यादि ॥ गुणस्पृश्शब्दात् स्वादय अनुडदिति शस्य ग । गुणस्पृक् गुणस्पृग गुणस्पृशौ गुणस्पृश । इत्यादि ॥ षकारान्तो विद्विष्शब्द तत स्वादय जश्त्वादि । विद्विट् विद्विड् विद्विषौ विद्विष । इत्यादि ॥ एव रत्नमुष् वैरिपिष्कन्याश्लिष्प्रभृतय ॥ षष्शब्दस्य बहुत्ववाचित्वात्ततो जसादय । डतिष्णामिति जश्शसो लुक् जश्त्वादि । ष्णां सङ्ख्यानामिति

१ जक्षु भक्षणहसनयो । जागृ निद्राक्षये । दरिद्रा दुर्गतौ । चकासृ दीप्तौ । शासु अनुशिष्टौ ॥

आमो,-नाम् अदन्तम् । ,अनाम्नवतिनगरीणामिति निषेधेन ,ष्टुत्व । प्रत्यये इत्यनुनासिक ।,अतिसृचतुष्प इति निषेधात्-नामि न दीर्घ । पट् पड् । पट् पड् । । पड्भि । पड्भ्य । पड्भ्य । षण्णा । पट्सु पट्सु ॥ सकारान्तो वेधस्शब्द । तस स्वादय ॥

२६५-असोऽनेधादेः ।१।२।१२८। असन्तस्याग्दीर्घो भवति सौ परे नैधादे न चैकामन्त्रणे ॥-सुलुचि सस्य रिविसर्जनीयौ । मादौ सुपि सस्य रित्वोत्वयोरेड् सुपि रिर्विसर्जनीयश्च । तस्य शरि चेति वा स । वेधा, वेधसौ वेधस । हे वेध हे ,वेधसौ हे वेधस । वेधसा वेधोभ्या वेधोभिरित्यादि । वेधस्सु-वेध सु । एव चन्द्रमस्सुवचस्प्रभृतय ॥ दोस्शब्दात् ,स्वादय सुलुगादि । अजादौ षत्व । असुटि पद्वन्निति , वा दोषन्नादेश । श्नादि । दो । दोषौ । दोष । इत्यादि । दोष्ण दोष । दोष्णा दोषा दोषभ्या ,दोर्भ्याम् इत्यादि ॥ उशनस्शब्दात् ,स्वादय । ऋदुशनसीत्यादिना सोर्डादेश -डित्यन्त्याजादेर्लुक् । एकामन्त्रणे । वोशनो शनानिति विकल्पेनादेशद्वय ।,पक्षे वेधस्शब्दवत् । अन्यत्ताविशेष । उशना उशनसौ उशनस । हे उशन हे उशनन् हे उशन हे उशनसौ हे उशनस । इत्यादि वेधस्शब्दवत् ॥ पुरुदशस्शब्दस्य सोर्डादेश अन्यत् वेधस्शब्दवत् । पुरुदशा पुरुदशसौ - पुरुदशस ॥ एवमनेहस् शब्दस । अनेहा अनेहसौ अनेहस । इत्यादि ॥ पुम्सुशब्दात् स्वादय । उदित् नमाद्यर्थ ॥

२३६ पुंसो डम् ।१।२।११६। पुंस्शब्दस्य डम् भवति श्यनप्सुटि परे ॥ ड इत् अन्त्यादेशार्थ । नम् । स्महत इति दीर्घ सुलुगन्तलुचौ । शल्यनुस्वार । हलादौ पदस्येति सुटुक् । मस्य परस्योऽनुनासिकोऽनुस्वारो वा । सुंप्यनुस्वार, एव । शर्व्वम इत्यत ,नमुपदनात् नुसादेशानुस्वारस्यैव शरि ग्रहणान्मकारादेशानुस्वारात्परस्य ,सम्य पित्वं भवति । पुमान्

१ कर्म्मणा निरनुनासिकत्वेन 'मम्मो हालि सौ । ४७१' इत्यनुनासिकस्याप्राप्तौ पुंसो मकारस्य "शल्यनुस्वार । ४६' , इत्यनुस्वारो भवति ॥

गोधुही गोदुहि। हे–३। पुनरपि। गोधुक् गोधुग् गोदुही गोदुहि। गोदुहा गोधुग्भ्यां गोधुग्भिः। इत्यादि। एवं विश्वलिहादयः॥ धवान्तावप्रसिद्धौ॥ रेफान्तो वार्शब्दः। ततः स्वादयः। स्वमोश्च लुक्। जश्शसोःश्शौ धजलन्तत्वान्न नम्। शेषं प्राग्वत्। वाः वारी वारि। हे वाः हे वारी हे वारि। पुनरपि। वाः वारी वारि। वारा वार्भ्यां वार्भिः। इत्यादि॥ चतुरशब्दा-त्स्वादयः। जश्शसोःश्शी उतो वा। शेषं प्राग्वत्। चत्वारि। हे चत्वारि। चतुर्भिः। इत्यादि॥ लमान्तावप्रसिद्धौ॥ मकारान्तः प्रियमदाम्शब्दः। ततः स्वादयः। पूर्ववत्प्रक्रिया। प्रियप्रदान् प्रियप्रदामी प्रियप्रदामि। इत्यादि॥ ञकारान्तोऽप्रसिद्धः॥ णकारान्तः सुगण्शब्दः। ततः स्वादयः। सुगण् सुगणी सुगणि। इत्यादि॥ नकारान्तः कर्मन्शब्दः ततः स्वादयः। स्वमोः लुकि। नलुक्। शौ न्यगिनि दीर्घः। एकामन्त्रणे॥

२७१ अलुग्वा।१।२।३। एकामन्त्रणे नडालुगिति या नकारस्या-लुक् सा नपुंसके वा भवति॥ पक्षे नस्य लुक् शेषं प्राग्वत्। कर्म कर्मणी कर्माणि। हे कर्मन् हे कर्म हे कर्मणी हे कर्माणि। कर्म कर्मणी कर्माणि। कर्मणा कर्मभ्यां कर्मभिः। इत्यादि। एवं चर्मन्वर्मन्नर्मन्शर्मन्प्रभृतयः॥ अहन्शब्दात् स्यादयः। स्वमोः लुक्। सजूरहन्स इति नस्य रि तस्य विसर्जनीयः। ग्याङिर्योर्नेर्नि वा श्नः। हलादौ नस्य रि उदत्मेड् च। सुपि विसर्जनीयः सश्च वा। अहः अह्नी अहनी अहानि। हे अहः हे अह्नी हे अहनी हे अहानि। अहः अह्नी अहनी अहानि। अह्ना अहो-भ्याम् अहोभिः। अह्ने अहोभ्याम् अहोभ्यः। अह्नः अहोभ्याम् अहोभ्यः। अह्नः अह्नोः अह्नाम्। अह्नि अहनि अह्नोः अहःसु अहस्सु॥ जकारान्तः असृज्शब्दः। ततः स्वादयः। नमादि। टादौ पद्दन्नित्यादिना वा असन्ना-देशः। पुनः प्राग्वत् स्वादि। शेषं सुगमम्। असृक् असृग् असृजी असृञ्जि। हे असृक् हे असृग् हे असृजी हे असृञ्जि। असृजा अस्ना असृग्भ्याम् असभ्याम् असृग्भिः असभिः। असृजे अस्ने असृग्भ्याम् असभ्याम् असृग्भ्यः असभ्यः। असृजः अस्नः असृग्भ्याम् असभ्य

असृम्य असम्य । अस्रृज असृज असृजो असृजो असृजाः असृजम् । असृर्जि असानि अस्त्रि असृजो असृजो असृक्षु असत्सु ॥ वगडान्ता अप्रसिद्धा ॥ दकारान्त सुविन्शब्द । तत स्यादय । सुवित् सुविद् सुविदी सुविन्दि । इत्यादि ॥ द्विपात्शब्दात् स्यादय । ग्या पदादेश शेष प्राग्वत् । द्विपात् द्विपाद् द्विपदी द्विपादि । हे द्विपात् हे द्विपाद् हे द्विपदी हे द्विपान्दि । द्विपदा द्विपाभ्यां द्विपाद्भि । इत्यादि ॥ ढान्तोऽप्रसिद्ध ॥ भकारान्त सुककुभ्शब्द । तत स्यादय । सुककुप् सुककुब् सुककुभी सुककुम्भि । इत्यादि ॥ घढान्तावप्रसिद्धौ । धकारान्त सुबुध्शब्द । तत स्यादय । सुभुत् सुभुद् सुबुधी सुबुन्धि । इत्यादि ॥ खफान्तावप्रसिद्धौ ॥ छकारान्त शब्दप्राच्छ्शब्द । तत स्यादय । शब्दप्राट् शब्दप्राड् शब्दप्राच्छी शब्दप्राञ्छि । इत्यादि ॥ ठकारान्तोऽप्रसिद्ध ॥ थकारान्त सुमथशब्द । तत स्यादय । सुमन् सुमद् सुमथी सुमन्थि इ० । चकारान्त प्राञ्चशब्द । तत स्यादय । ग्या श्चादेशे दीर्घ । शेष प्राग्वत् । प्राक् प्राग् प्राची प्राञ्चि । इत्यादि ॥ एवमपाच्शब्द । प्रत्यच्शब्दात् स्यादय । ग्या श्चदीर्घौ । प्रत्यक् प्रत्यग् प्रतीची प्रत्यञ्चि । इत्यादि ॥ उदच्शब्दस्य । उदक् उदग् उदीची उदञ्चि । इत्यादि ॥ सम्यच्शब्दस्य । सम्यक् सम्यग् समीची सम्यञ्चि इत्यादि ॥ सध्यच्शब्दस्य । सध्यक् सध्यग् सध्रीची सध्यञ्चि । इत्यादि ॥ तिर्यच्शब्दस्य तिर्यक् तिर्यग् तिरश्ची तिर्यञ्चि इत्यादि ॥ टान्तोऽप्रसिद्ध ॥ तकारान्त शकृत्शब्द । तत स्यादय । शकृत् शकृद् शकृती शकृन्ति । इत्यादि । टादौ पद्दन्नित्यादिना वा शकन्नादेश आदि । शकृता शक्ना शकृद्भ्या शकभ्या शकृद्भि शकभि । इत्यादि ॥ यकृत्शब्दात् स्यादय । यकृत् यकृद् यकृती यकृन्ति । इत्यादि । टादौ पद्दन्नित्यादिना वा यकन्नादेश यकृता यक्ना यकृद्भ्या यकभ्या यकृद्भि यकभि । इत्यादि ॥ दधत्शब्दात् स्यादय । ऋदित् । शौ ॥

२७२ अज्झेदशतु ।१।२।१४। अच्प्रकृति झिर्वत्सद्वानो सोऽ-

ज्ञि तस्माद्द्विरुक्ताज्जक्षादिपञ्चकाच्च परो य शता तदन्तस्य नपो नम् वा भवति शौ परे ॥ शेष सुगम । दधत् दधद् दधती दधन्ति दधति । एव दद्दतृजक्षतृप्रभृतय ॥ यातृशब्दात् स्यादय । ऋदित् ॥

२७३ ङीग्योर्वाऽऽद्श्च ।१।२।१६। अवर्णात् परो य शता तदन्तस्य नपो नम् वा भवति ङीग्यो परत न श्नाप्रत्ययात् ॥ यात् याद् याती यान्ति । इत्यादि । एव भात् तुदत् करिष्यत् इत्यादय ॥ भवतृशब्दात् स्यादय ॥

२७४ शप्श्यात् ।१।२।१७। शपः श्याच्च परस्य शतुर्नम् नित्य भवति ङीग्यो परत ॥ भवत् भवद् भवन्ती भवन्ति । इत्यादि ॥ एव दीव्यत्शब्दस्य । दीव्यत् दीव्यद् दीव्यन्ती दीव्यन्ति । इत्यादि ॥ क्षीणत्शब्दस्य अश्न इति निषेधात् ङीग्योर्न नम् । क्षीणत् क्षीणद् क्षीणती क्षीणन्ति । इत्यादि ॥ फषान्तानप्रसिद्धौ ॥ शकारान्त सदृश्शब्द । तत स्यादय । सदृक् सदृग् सदृशी सदृंशि[3] । इत्यादि । एव तादृशादय ॥ षकारान्त सुपिष्शब्द । तत स्यादय । सुपिट् सुपिड् सुपिषी सुपिंषि । इत्यादि ॥ सकारान्त पयस्शब्द । तत स्यादय । शौ नमि । 'स्महत' इति दीर्घे शेष माग्वत् । पय पयसी पयांसि । इत्यादि । एव तेजस्वयस्एनस्अनस्प्रभृतय ॥ विद्वस्शब्दात् स्यादय । ग्या क्वस उत् । शेष माग्वत् । विद्वत् विद्वद् विदुषी विद्वांसि । एवमनाश्वप्पेचिवस्प्रभृतय ॥ अर्चिस्शब्दात् स्यादय । शौ नमि दीर्घे च कृते

---

१ ङीग्योरिति किं तुदता कुलेन । आदिति किं सुवती कुले । सन्ती स्त्री सन्ती कुले । अश्न इति किं क्षीणती स्त्री क्षीणती कुले ॥ अश्न आदिति विशेषणाद् श्न इति निषेधाच्च लप्दीपाभ्यां पूर्वं नम् भवति । भूतपूर्वतया वा अत इत्यनुक्त्वा आदश्न इति वचनात्परत्वादनुवृत्ताश्च पूर्वं श्नस्य ॥

२ भवतिर्भावप्राप्तिभवनमात्रे । द्विवि । हि भवन सन्निधिमात्रमापत्तिभवन च । तत्रहापत्ति । घट इति सन्निधभवनम् । मृद्घटीभवतीत्यापत्तिभवनम् ॥

३ अलामिति नम् । न्यगिति ... ध्ये शकारस्य गकार ॥

पुनरनुस्वारषत्वे । अर्चि अर्चिषी अर्चींषि । इत्यादि । एवं सर्पिर्मुहुर्वि सममूतय ॥

॥ इति हलन्ता नपुंसकलिङ्गाः ॥

## ॥ अथालिङ्गौ युष्मदस्मच्छब्दावुच्येते ॥

तत्र स्वादय "युष्मदस्मद्भ्यामाकम् ।२८७। , इत्यन्तं ॥

२७५ त्वाहौ सौ ।१।२।१८७। युष्मदस्मदोस्त्वेतयो त्व अहं इत्येतावादेशौ यथासङ्ख्यं भवतः तदन्तस्यापि अन्यसम्बन्धिनि वा सौ परे ॥ युष्मदस्मत्प्रकरणामन्ते सुप तत्संबन्ध्यन्यसम्बन्धिन्य वाच्य ॥

२७६ ङेसुटोऽम् ।१।२।१८०। युष्मदस्मद्भ्यां परयोर्ङेसुटोरम् भवति ॥ मत्यलुचौ ॥

२७७ मन्तस्य युवावौ द्वयो ।१।२।१८५। द्वित्वे युष्मदस्मदोर्मपर्यन्तस्य रूपस्य युवावौ भवतः सुपि परे॥

२७८ अमौश्चल्या ।१।२।१८३। युष्मदस्मदोरात् भवति अमि औति हलादौ च सुपि परे ॥ 'एदे' इत्यतो लुक् । अमद्वाँ । जसि ॥

२७९ यूयवयौ जसि ।१।२।१८८। युष्मदस्मदोर्यूयवयौ भवतो जसि परे ॥ अमादि । आमन्त्रणेऽप्येवम् । अमि ॥

---

१ अलिङ्गावयकालिङ्गौ लिङ्गनिमित्तशब्दस्कारानहावित्यर्थ । पञ्च पद् इति, उर्धे. नाम यूय वयम् ॥

२ अतिक्रान्तस्त्वामतित्वम् । अत्यहम् । अतिक्रान्तो युवामतियुवाम् । अतिक्रान्तो युष्मानतित्व अत्यहम् ॥

३ द्वित्वविशिष्टेऽर्थे वर्तमानयोर्युष्मदस्मदोर्मकारोऽन्तमानात्ययन्तस्य तदन्तस्यान्यसम्बन्धिनि वा सुपि परे यथाक्रमं युव आव इत्येतावादेशौ भवत ॥ अतिक्रान्तौ युवां अतियुवाम् । अत्यावाम् ॥ अतिक्रान्तौ युवां अतियुवाम् अत्यावाम् ॥ अतिक्रान्तान् युवां अतियवान् अत्यावान् ॥ एवं अतियुवया अत्यावया इत्यादि ज्ञेयम् । मन्तस्येति किं? युवयोरित्यादि ॥

४ अमौश्चगीति किं? त्वं अहं त्वां माम् ॥ औतिग्रहणेन 'ङसुटोऽम्' इति सूत्रेण इतऽम परे भवतीत्यर्थ ॥

५ सर्वनाम्नामामन्त्रणं नास्तीति मतमत इति त्वाम्भ्यामुपसंवादाम् नगविधिर्वि कल्पनीय ॥

२८० त्वमौ प्रत्ययोत्तरपदे चैकस्मिन् ।१।२।१८६। एकत्वे वर्तमानयोर्युष्मदस्मदोर्मपर्यन्तस्य त्वमौ भवत सुपि प्रत्ययोत्तरपदयोश्च परत ॥ अरागि औटि पूर्ववत्। शसि ॥

२८१ ङ्सोऽभ्यसोऽम्नाभ्य ।१।२।१७८। युष्मदस्मद्भ्या परस्य ङसोऽश् भवति शस आदेर्न चतुर्थीबहुवचनस्य भ्यस अभ्यम् ॥ आत्वादि। टाया त्वमौ ॥

२८२ यौ मि य ।१।२।१८४। युष्मदस्मदोयो भवति ङिटौसु परत ॥ अदेन् एद इत्यतो लुक्। भ्यामि युवाव्यां आत्वदीर्घौ। मिस्यप्यात्वदीर्घौ ॥ ङयि ॥

२८३ तुभ्यमह्यौ ङयि ।१।२।१८९। युष्मदस्मदोस्तुभ्यमह्यौ भवतो ङयि परे ॥ ङेरमादि। भ्यामि प्रागवत् भ्यस अभ्यमि ॥

२८४ दोर्लुक् ।१।२।१८१। दान्तयो युष्मदस्मदोर्लुग्भवति सुपि परे ॥ एद इति लुक् ॥ ङसौ त्वमौ ॥

२८५ भ्योऽस्मोऽद् ।१।२।१७९। युष्मदस्मद्भ्यां परस्य ङसे भ्यसश्च अद् भवति ॥ दोर्लुगकुर्वे। वा चर्वे। भ्यामि प्रागवत् । भ्यसोऽदादि। ङसि ॥

२८६ तवममौ ङसि ।१।२।१९०। युष्मदस्मदोस्तवममौ भवतो ङसि परे ॥ ङसोऽश्। शित्त्वात्सर्वस्य। एद इति लुक्। 'ओसि युवाव्योरादि। आमि ॥

२८७ युष्मदस्मद्भ्यामाक ।१।२।१७७। युष्मदस्मद्भ्यां परस्याम आकं भवति ॥ दोर्लुगादि। ङौ त्वमौ यत्वादि। ओसि प्रागवत् सुप्यात्वादि। त्व युवा यूय। हे त्व हे युवा हे यूय। त्वां युवा युष्मान्। त्वया युवाभ्या युष्माभि । तुभ्य युवाभ्या युष्मभ्य। त्वत् त्वद् युवाभ्या युष्मत् युष्मद्।

१ भवता सहवर्तितऽ। भोऽस्। तस्य भौस। अत्र पञ्चम्येकवचनस्य न तु पञ्चमीबहुवचनस्य। अस्तद्वर्तितस्य भ्यः पञ्चमीबहुवचनस्य ग्रहण न तु चतुर्थीबहुवचनस्य। तथोक्तवतः ... विशेषितेः ॥

तव युवयो युष्माक। त्वयि युवयो युष्मासु ॥ अहम् आवां वयम्। माम् आवाम् अस्मान्। मया आवाभ्याम अस्माभि। मह्यम् आवाभ्याम् अस्मभ्यम्। मत् मद् आवाभ्याम् अस्मत् अस्मद्। मम आवयो अस्माकं। मयि आवयो अस्मासु ॥

**२८८ तिङो वाक्य** ।१।१।६१। तिङन्तस्य विशेषण तेन सह वाक्यसंज्ञ भवति ॥

**२८९ पदाद्वाक्यस्य वस्नसौ युष्मिभक्ते** ।१।२।१९१। स्ववाक्यावयवात्पदात्परयो द्वितीयाचतुर्थीषष्ठ्यन्तयोर्युष्मदस्मदोर्वस्नसौ यथासङ्ख्य वा भवत ॥ धर्मो वो रक्षतु। धर्मो युष्मान् रक्षतु। दान वो दीयते। दान युष्मभ्य दीयते। तिङन्तादिपदाप्रयोगेऽपि तदर्थान्वयाद्वाक्यत्व। शील व स्व। शील युष्माक स्व। धर्मो नो रक्षतु। धर्मोऽस्मान्रक्षतु। दान नो दीयते। दान अस्मभ्य दीयते। शील न स्व। शीलमस्माक स्व ॥

**२९० वाम्नावौ द्वित्वे** ।१।२।१९२। द्वित्वे वर्तमानयोर्यथोक्तविशेषणयो युष्मदस्मदो वाम्नाविन्येतावादेशौ यथासङ्ख्य वा भवत ॥ धर्मो वा रक्षतु। धर्मो युवा रक्षतु। दान वा दीयते। दान युवाभ्या दीयते। शील वा स्व। शील युवयो स्व। धर्मो नौ रक्षतु। धर्म आवा रक्षतु। दान नौ दीयते। दानमावाभ्या दीयते। शील नौ स्व। शीलमावयो स्व ॥

**२९१ तेमयावेकत्वे** ।१।२।१९३। एकत्वे वर्तमानयोर्यथोक्तविशेषणयोर्युष्मदस्मदोर्यथासङ्ख्य ते मे इत्यादेशो वा भवत ॥ दान ते दीयते।

---

२ एकवचनसामर्थ्यादेकक्रियया वाक्यम्। आकाङ्क्षायोग्यतासंनिसम्बन्धेन कारण त्रयम्। एतल्लक्षण यस्मिन्वचनत तदेव वाक्यम्। इह साक्षात्परम्परया वा तिङन्तस्य विशेषण प्रयुज्यमानमप्रयुज्यमानं वा तेन तिङन्तेन प्रयुज्यमानेनाप्रयुज्यमानेन वा सह वाक्यसंज्ञ भवति ॥ धर्मो वो रक्षतु। शालीना ते ओदन ददाति। देवदत्तेन वो दातव्यम्। साकाङ्क्षत्वेऽपि तिङन्तभेद वाक्यभेदार्थ वचनम्। ओदन पच तव भविष्यति। पच तव भविष्यति। ओदन भविष्यति मन भविष्यति। यथाप्रकरणाद्यऽवगतावप्रयोग ॥

दान तुभ्य दीयते। शील ते स्व। शील तव स्व। दान मे दीयते। दान मह्य दीयते। शील मे स्व। शील मम स्व॥

**२९२ त्वामौ छितीयाया.** ।१।२।१९४। एकत्वे वर्तमानयो यथोक्तविशेषणयोर्युष्मदस्मदोर्यथासङ्ख्य द्वितीयान्तयो त्वा मा इत्यादेशौ वा भवत ॥ धर्मस्त्वा रक्षतु। धर्मस्त्वा रक्षतु। धर्मो मा रक्षतु। धर्मो मा रक्षतु॥

**२९३ नेवामन्त्र्य पूर्वं** ।१।२।१९५। युष्मदस्मद्भ्या पूर्वमामन्त्र्य-पद नेव असदिव भवति॥ असत्त्वे पदात्परत्वाभावात् तयोर्वस्नसादि न भवति। हे जना युष्मान्रक्षतु धर्म इत्यादि। हे जना अस्मान्रक्षतु धर्म इत्यादि। यत्र त्वामन्त्र्यपदात्पूर्वं पदान्तरमस्ति तत्र पदात्परत्वाद्वस्नसादि भवति। धर्मो हे जना वो रक्षतु। धर्मो हे जना नो रक्षतु इत्यादि। राजते

---

१ इवग्रहणमामन्त्र्यशब्दश्रवणार्थम्। पूर्वस्याविद्यमानवद्भावो व्यवहितस्यापि अविद्यमानवद्भावार्थ। अन्यथा हि नामन्त्र्यादित्येवोच्येत। तेन देवदत्त धर्मो नो रक्षतु इत्यत्र "पदात्प्रथमाया वा ।५।२।२०८। पदात्पर यत्प्रथमान्त पद तस्मात्परयोर्युष्मदस्मदोरन्यादेशे यदुक्त वस्नसादि तद्वा भवति॥ यूय विनीतास्तद्गुरवो वो। यूय विनीतास्तद्गुरवो युष्मान्। वय विनीतास्तद्गुरवो न। वय विनीतास्तद्गुरवोऽस्मान्। युवा सुशीलौ तद्गुरवो वा। तद्गुरवो युवा। आवा सुशीलौ तद्गुरवो नौ। तद्गुरव आवा मानयन्ति॥ अथो क्षमा तत् श्रमणास्ते तुभ्यम्। अथो क्षमा तत् श्रमणा मे। अथो क्षमा तत् श्रमणा मह्यम् ज्ञान प्रयच्छन्ति॥ धनवाँस्त्व तल्लोकस्त्वा त्वा। धनवानह तल्लोको मा तल्लोको मा मानयति॥ इति चिन्तामणौ" इति विकल्पो न भवति॥ स्वरूपश्रुत्यर्थमामन्त्र्यपद आदेशाभावे नेवेति पदम्। आमन्त्र्यते सम्बोध्यते यत्पद तदामन्त्र्यम्। अविद्यमानत्वे प्रयोजन वस्नसाद्यभावादि। इवग्रहण श्रवणार्थम्। आमन्त्र्यमिति किं? धर्मो वो रक्षतु॥ पूर्वमिति किं? मयैतत्सर्वमाख्यात युष्माक मो मुनिपुङ्गवा। मरस्मरस्वेऽत पादाद्योरिति प्रतिषेधो न स्यात्॥

जिनराज ते ॥ "नै ।१।२।१९७।" इत्यधिकृत्य ॥

**२९४ पादाद्योः** ।१।२।१९८। पादाद्यो तयो वसमादि न भवति ॥

त्रिलोकनगराधीशो युष्मान् पातु जिनेश्वर ।

तस्यैव शासन पुण्यमस्माकं मोक्षकारणम् ॥ इत्यादि ॥

**२९५ मनसीक्षार्थे** ।१।२।१९९। मनसीक्षार्थे धातुभियोगे त- योर्वसमादि न भवति ॥ जनो युष्मान् समीक्षते । जनोऽस्मान् प्रेक्षते इ- त्यादि ॥ मनसीति किं? जनो य पश्यति चक्षुषा ॥

**२९६ चवाऽहैवयोगे** ।१।२।२००। चादिभिर्योगे सम्बन्धे सति तयोर्वसादि न भवति ॥ जनो युष्माश्च पश्यति । दान युष्मभ्य वा दीय ते । इद युष्माकमह शील । जनो युवा ह पश्यति । जनस्त्वामेव पश्यति इत्यादि । एवमस्मदोऽपि ॥

**२९७ नित्यमन्वादेशे** ।१।२।२०१। कथितस्य कथनमन्वादेश तस्मिन् यथोक्तविशेषणयोर्युष्मदस्मदोर्वसमादि नित्य भवति । यूय विनीतास्त द्वो गुरवो मानयन्ति । वय विनीतास्तन्नो गुरवो मानयन्ति इत्यादि ॥ अ न्वादेशे नित्यविधानात्पूर्वत्र विकल्प ॥

## ॥ अथाव्ययान्युच्यन्ते ॥

**२९८ तस्वन्डामघण्तस्याक्त्वान्तुन्तिसुङ्सस्वाभस्वरा-**

१आमन्त्र्यपद विशेष्य । युष्मदस्मद्भ्यां पूर्वमामन्त्र्यपदे तद्विशेषणे पर न नेव अविद्यमानवच्च भवति । भो साधू सुविहितौ वां शरण प्रपद्ये । भो साधो सुविहित त्वां शरण प्रपद्ये । भो साधो सुविहित नो रक्ष । भो साधो सुविहित मा रक्ष ॥

२ ईक्षा दर्शन तदर्थधातुभि सहित यद्वाक्य तस्य पदात्परयोर्युष्मदस्मदोर्यदुक्त वस्न सादि तन्न भवति । सा चेदीक्षा मनसि मनोविषया भवति ॥

३ तस् यन् डाम् अघण्तसि आम् क्त्वा अम् तुम् इति प्रत्यया । प्रत्ययश्च प्रकृत्य- विनाभावीति एतत्प्रत्ययान्त शब्दस्वरूपमिति विज्ञेयम् । द्विवार तस् किं? इति चेत् "स्याद्यभ्यो तस् ।१८१।" इति य तस् स अघण्तसीति प्रत्याहारे उपात्त । अत एकदिशि ।७४८।' इत्यनेन कृततसन्तस्य ग्रहणार्थं पुनस्तसग्रहणम् ॥ यन् इत्यादि साहचर्यात्तसपि तद्धित एव गृह्यते तेन पचत इत्यादावव्ययत्व नास्ति ॥ आमिति

**दोन्यदव्ययम्**।१।१।३९। ॥ तस् वत् डा इत्येतदन्तानि णव जितत्स्यन्तानि आम् क्त्वा अम् तुम् इत्येतदन्तानि तिसञ्ज्ञानि सुड्ससुप्रति रूपाणि स्वरादीनि च शब्दरूपाण्यव्ययसञ्ज्ञानि भवन्ति ॥ तस् पीलु मूलतस् इति स्थिते ॥

**२९९ अव्ययात्स्वौजस्** ।१।३।९७। अव्ययात् स्वौजस प्र त्यया परे भवन्ति ॥

**३०० अव्ययस्य** ।१।२।१५४। अव्ययस्य सम्बन्धिन सुप श्लुग्भवति॥ पदसञ्ज्ञाया सस्य रित्यादि। पीलुमूलतो निर्योतते विद्युत्। एवमन्यत्रापि॥ वत मुनिवद्वृत्तमस्य ॥ डाम् । किंनरा ॥ तसि । रावणत रामत बहुश ॥ आम् द्रयाचक्रे ॥ क्त्वा भूत्वा ॥ अम् । पूर्वभोज ॥ तुम् । कर्तुं ॥ ति । पटपटा-कृत्य माध्नकृत्य ॥ सुड्प्रतिरूप । रात्रौ । वेलायाम् ॥ अस्ति स्यात् ॥ ससुप्रतिरूपाणि तत । कथ ॥ स्वरादि । स्वस्तिष्ठति अन्तस्तिष्ठति प्रातर्गच्छतीत्यादि ॥

सदृश त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥

॥ इति नामसग्रह ॥

---

लिङ्लडादेशस्य ग्रहणम् न तु षष्ठीबहुवचनस्य । तत्कथमिति चेत् ऐकान्तिकानैकान्तिक प्रसङ्गे हि एकान्तिकप्रत्ययो भवति । षष्ठीबहुवचनं तु कचिदाम् कचिदामित्यादे शप्राप्तत्वादनैकान्तिकमिति तस्य ग्रहणं न भवति । लिङ्लेदादेशस्याम् एकान्तिक एवेति तस्य ग्रहणम् । क्त्वा इति ककारोऽसन्देहार्थः । त्वामित्युच्यमाने भावत्वतलिति त्वप्रत्ययो वेति सन्देह ॥ अमिति न द्वितीयैकवचनग्रहणम् । अनुबन्धसाहचर्यात् णमुल्णमुलनुबन्धौ विना अमिति रूपस्य ग्रहणम् ॥ पीलुवृक्षफलपर्यायौ केन ॥

१ सूत्रपाठो द्विविध अन्वयपाठ संहितापाठश्चेति । तत्रान्वयपाठ पदच्छेदादिव्युत्पाद नाय । संहितापाठो ग्रन्थसङ्कोचाय । तयो अन्वयोऽयमन्वयपाठ ओंकारस्याग्रेऽयं । अत्र पौनःपुन्यमुणगायम ॥

## ॥ अथ स्त्रीप्रत्ययान्ता उच्यन्ते ॥

" स्त्रियामनूडः स्त्रियाम् १९२ " इत्यधिकृत्य ॥

**३०१ गुरूपोत्तमस्यानार्षेऽपत्येऽणिञः ष्यङ्** ।१।३।२। अनार्षेऽपत्ये अणिञन्तस्य गुरूपोत्तमस्य स्त्रियां ष्यङ् भवति ॥ स्यादीनां वर्णानाम् अन्त्यमुत्तमं तस्य समीपमुपोत्तमं । पञ्चाग्निनी । षकारः ष्यदिति प्रत्याहारार्थः । ङकारः अन्त्यादेशार्थः । आट् कारीषगन्ध्या दैवदत्त्या । गुरूपोत्तमस्येति किम् औपगवा दाक्षी ॥

**३०२ नृदुगिदृश्चोऽस्वस्रादेर्ङी** ।१।३।७। स्त्रियां वर्तमानान्नान्ता ऋदन्तादुगिदन्तादञ्चत्यन्ताच्च ङीप्रत्ययः परो भवति न स्वस्रादेः ॥ श्व इव् । नान्तात् राज्ञी । श्वादि । सोर्ङ्ग्यङ्याडिति लुक् । ऋत ॥

**३०३ क्रोष्टोः** ।१।३।१। स्त्रियां वर्तमानस्य क्रोष्टुशब्दस्य ऋदादेशो भवति ॥ क्रोष्ट्री कर्त्री । उगित । भवती यान्ती याती भवन्ती । अञ्च । प्राची अपाची प्रतीची उदीची समीची सध्रीची तिरश्ची । अस्वस्रादेरिति किं । स्वसा दुहिता ननान्दा माता याता ॥

**३०४ पादो वा** ।१।३।९। स्त्रियां पादन्तात् ङी वा भवति ॥ ङ्या पादोऽपदस्येति पद्भावः । द्विपदी द्विपाद् ॥

---

१ अनुस्वारो विसर्गान्तो दीर्घो युक्परश्च यः । इति गुरुलक्षणम् ॥ उत्तमशब्दोऽव्युत्पन्नः । स्यादीनां वर्णानामन्त्य उत्तमः । उत्तमस्य समीपमुपोत्तमं गुरुरुपोत्तमं यस्यासौ तस्य ॥ ऋषिसम्बन्धि आर्षम् । अनार्ष इति किं वासिष्ठी । अपत्य इति किं अहिच्छत्रेण जाता आहिच्छत्री । स्त्रियां इति अणिञ इति विशेषणत्वादण् न भवति । करीषगन्धेरपत्यं पुमान् कारीषगन्धः इहेव कारीषगन्धा यस्यां स्थाल्यां बहु कारीषगन्धी इत्यत्र टिड्ढाणिति ङी । सौधर्मी गौरादित्वात् ङी ॥

२ ऋदिति तकारः किं गॄ इत्यत्र न भवति । भवती महती इत्यव्युत्पन्नं प्रातिपदिकं व्यपदेशिवद्भावाद्भवति । उगित्वात्सिद्धे अञ्चतिग्रहणं धातोरुगितो अग्रहणार्थम् उखास्रत् । अस्वस्रादेरिति किं स्वसा परमस्वसा अतिस्वसा । तिस्रः चतस्रः । तिसृचतसॄ स्वस्रादिषु पाठः सन्निपातपरिभाषाया अनित्यत्वज्ञापनार्थं ॥

**३०५ कुम्भपद्यादौ** ।१।३।१०। कुम्भपद्यादय स्त्रिया ङ्यन्ता निपात्यन्ते ॥ कुम्भपदी कलशपदी इत्यादि ॥ ऋच्च्यादित्यधिकृत्य ॥

**३०६ मन्नन्बहुव्रीहेर्न च** ।१।३।१२। स्त्रिया मन्नन्तादन्नन्तबहुव्रीहेश्च आङ् प्रत्ययो वा भवति प्राप्तश्च न भवति ॥ ड इत् अन्त्याजादिलुगर्थं । दामा दामे दामा । दामा दामानौ दामान । बहुराजा बहुराजे बहुराजा । बहुराजा बहुराजानौ बहुराजान । अजेत्याङ् अजा अश्वा एलका मूषिका उष्णिहा कुञ्चा इत्यादि ॥

**३०७ टिड्ढणढञणञ्गौरादिभ्य.** ।१।३।१४। स्त्रिया टित ठण्-ढण्भ्याम् इञित अणत अञ गौरादिभ्यश्च ङी भवति ॥ टित उभयट् इति स्थिते । ट इत् ङ्यर्थं ॥

**३०८ लुगत** ।१।३।७८। अतो लुग्भवति ङ्या परत ॥ उभयी । ठण आक्षिकी । ढण नादेयी । इञ दाक्षी । अण औपगवी कुम्भकारी । अञ औत्सी । गौरादिभ्य गौरी । मत्स्य ङी इति स्थिते अलुचि ॥

**३०९ मत्स्यतद्धितस्य हलो यः** ।१।३।७९। मत्स्यशब्दस्य तद्धितप्रत्ययस्य च हल परस्य यस्य लुग् भवति ङ्या परत ॥ मत्सी मनुषी ॥

**३१० सूर्यागस्त्ययोश्छे च** ।१।३।८०। सूर्यागस्त्ययोर्ङ्यां छे प्रत्यये च यस्य लुग्भवति ॥ सौरी आगस्ती ॥

**३११ वयस्यनन्त्ये** ।१।३।१७। स्त्रियामनन्त्ये वयसि वर्तमानात्

---

१ आदिशब्देन एकपदी, शतपदी, मुनिपदी, गोपापदी इत्यादिशब्दानां ग्रहणम् ॥

२ ठण् इत्यत्र ठढ इत्येतयोर्द्वयोर्मध्ये स्थितो यो णकार स इह देहलीदीपन्यायेन द्वयोरपि सम्बध्यते । तेन ठण् ढण् इति गृह्यते । इश्च इन् च ईम् । अनेकारप्रश्लेष किं? वाराणा । बालाक्या इत्यत्र ङी न भवति ॥

३ छे इति किं? सौर्य आगस्त्य । सूर्यस्येय सौरी । छ प्रत्यये सूरीय । आगस्तीय ॥

अर्कोगन्ता ङी भवति ॥ ज्यागी तरणी । तनन्य डति किं स्थविरा ॥

३१२ ऊङ ।१।३।२०। स्त्रियामुतन्ताद्रज्जुमादेर्ङी भवति ॥ ग । घटोघ्नी ॥

३१३ श्वचनो वा ।१।३।२१। श्वचनोऽन्ताद्रज्जुमादे स्त्रिया ङी वा भवति ॥ बहुगन्नी बहुगना । श्वन इति किं बहुश्वा बहुश्वे बहुश्वा । बहुश्वा बहुश्वा ॥ बहुश्वान ॥

**३१४ अनाच्छादनाज्जाते पूर्वपदात् क्तादजातकृतमितप्रतिपन्नात्** ।१।३।२४। अनाच्छादनाज्जातिवाचिन पूर्वपदात्परे य क्तान्त जातकृतमितप्रतिपन्नवर्जित शब्द तदन्ताद्रज्जुमादे स्त्रिया ङी भवति ॥ शङ्खभिन्नी पेशऊनी । अनाच्छादनादिति किं वस्त्रच्छन्ना । जातेरिति किं मासयाता । जातादिप्रतिषेध किं दन्तजाता दन्तकृता स्तनमिता गुणप्रतिपन्ना ॥

**३१५ पाणिगृहीतीति पत्नी** ।१।३।२५। स्त्रियां पाणिगृहीतीत्येवमकारा पत्नीवाचकशब्दा ङ्यन्ता निपात्यन्ते ॥ पाणिगृहीती करगृहीती पाण्यात्ती ॥

**३१६ वाऽस्वाङ्गात्** ।१।३।२६। अस्वाङ्गवाचिनो य क्तान्त तदन्ताद्रज्जुमादेरकाविशेषणात् स्त्रियां ङी वा भवति ॥ पलाण्डुभक्षिती पलाण्डुभक्षिता । अस्वाङ्गादिति किं शङ्खभिन्नी ॥

**३१७ असहनञ्विद्यमानान्नासिकोदरोष्ठजङ्घादन्तकर्णशृ-**

१ अत' इत्यनुवर्तनादकारान्तात् ङी भवतीत्यर्थ । अत इति किं शिशु बाला इत्यादिरजादि । अभिन्नरजस्का पुरुषणासम्प्रयुक्ता स्त्री कुमारी । प्राणिनो कालकृताव स्था वयआदिवय । तद्द्विविध वृद्धिमत् हानिमच्च । तत्र वृद्धिमदन्त्यम् । हानिमद त्यमिति ज्ञेयम् ॥

२ सह च नञ् च विद्यमान च सहनञ्विद्यमान यस्मिन् तत् तस्मात् । पूर्वपदविशेषणमिद । बहवोऽच्चो यस्य स बह्वच् । अन्त्यस्य समीप यतत इत्युपान्त्य संयोग उपान्त्यो यस्य स संयोगोपान्त्य बह्वच्च स संयोगोपान्त्य स न विद्यत यस्य तत् तथोक्त । पुन नासिकादीनां द्वन्द्व ट वा पश्चादनन द्वन्द्व ॥

**नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठादबह्वच्सयोगोपान्त्यात् स्वाङ्गात् समासात्**
।१।३।२७। सहनञ्विद्यमानवर्जितादस्वाङ्गवाचिनः परं यन्नासिकादि यच्चाबह्वच सयोगोपान्त्यान्यस्वाङ्गवाचि तदन्तादन्तात्समासात् स्त्रियां ङी वा भवति ॥ दीर्घनासिकी दीर्घनासिका । तलोदरी तलोदरा । बिम्बोष्ठी बिम्बोष्ठा । समजङ्घी समजङ्घा । चारुदन्ती चारुदन्ता । लम्बकर्णी लम्बकर्णा । पटुशृङ्गी पटुशृङ्गा । नताङ्गी नताङ्गा । तनुगात्री तनुगात्रा । कलकण्ठी कलकण्ठा । अबह्वच् सयोगोपान्त्यात् स्वटी स्वटा शृङ्खिकी । स्निग्धकेशी स्निग्धकेशा । पृथुस्तनी पृथुस्तना रामा । बहुकेशी बहुकेशा रथ्या । दीर्घमुखी दीर्घमुखा प्रतिमा । असहनञ्विद्यमानादिति किं सहनासिका अनासिका विद्यमाननासिका । अबह्वच्सयोगोपान्त्यादिति किं पृथुजघना चारुगुल्फा । स्वाङ्गादिति किं बहुशोभा पुरी । बहुशोफा जरती । बहुकफा बहुज्ञाना कन्या । अत इति किं कल्याणपाणिः ॥

अविकारोऽद्रवं मूर्तं प्राणिस्थं स्वाङ्गमुच्यते ॥
च्युतं च प्राणिनस्तत्तन्निभं च प्रतिमादिषु ॥ १ ॥

---

१ विकारो वातादिक्षोभजन्मा तत्स्वाङ्गं न भवति । न विद्यते विकारोऽस्यासावविकारः । अथवा विशेषेण द्रव्यस्यावस्थान्तरं करोतीति विकारः न विकारोऽविकारः । शोफादानां विकारत्वान्न ङी ॥ द्रवणं द्रवः न विद्यते द्रवोऽस्येत्यद्रवं । द्रवतीति वा द्रवं न द्रवमद्रवं तत्स्वाङ्गम् । द्रवरूपं कफादि तत्र ङी न भवति ॥ रूपादियोगो मूर्तिः । असर्वगतद्रव्यपरिणामो वा मूर्तिः तद्योगान्मूर्तं पुद्गलद्रव्यं तत्स्वाङ्गम् । तेनेह ङी न भवति बहुज्ञाना । ज्ञाने ह्यात्मधर्मो न मूर्तम् ॥ आयुरुच्छ्वासादयो दशेन्द्रियाणि प्राणाः ते येषां सन्ति ते प्राणिनः ते इह द्वित्रिचतुरिन्द्रियाः प्राणिनस्तेषु तिष्ठतीति प्राणिस्थम् ॥ प्राणिस्थस्यैवावयवस्य स्वाङ्गत्वव्यपदेशात् बहुकेशी रथ्या इत्यत्र कथं ङी भवतीति चेत् अपरं लक्षणद्वयमुच्यते । प्राणिनश्च्युतं चलं अङ्गं तदविकारादिलक्षणयुक्तं स्वाङ्गं भवति तेन बहुकेशी रथ्या इत्यत्र ङी भवत्येव ॥ प्रतिमादिषु स्थितं च स्वाङ्गवाचि यदङ्गं तन्निभं तदविकारादिलक्षणसन्निभमङ्गं स्वाङ्गमुच्यते । तेनेह ङी भवति दीर्घमुखी प्रतिमा ॥ आदिशब्देन आलेख्यादिपरिग्रहः चित्रादिविलेखितपरिग्रह इत्यर्थः ॥

३१८ द्विगो ।१।३।३९। अदन्तात् द्विगोः स्त्रियां ङी भवति ॥ त्रिलोकी अष्टसहस्री ॥

३१९ न पत्यन्तस्य ।१।३।४०। पत्यन्तस्य स्त्रियां नो भवति ॥ नान्तत्वे नृदुगिदिति ङी । दृढपत्नी दृढपति ॥

३२० सपत्न्यादौ ।१।३।४१। सपत्न्यादि स्त्रियां साधुर्वेदितव्यः ॥ सपत्नी एकपत्न्यादि ॥

३२१ पतिवत्न्यन्तर्वत्न्यावविधवागर्भिण्यो ।१।३।४२। अविधवायां पतिवत्नीति निपात्यते गर्भिण्यामन्तर्वत्नीति ॥

३२२ रोहिणरेवतान्नक्षत्रे ।१।३।४३। रोहिणरेवताभ्यां स्त्रियां ङी भवति नक्षत्रे वाच्ये ॥ रोहिणी रेवती । नक्षत्र इति किं । रोहिणा रेवता ॥

३२३ नीलात्प्राण्योपध्यो ।१।३।४४। नीलशब्दात् स्त्रियां ङी भवति प्राणिन्योषधौ चार्थे ॥ नीली गौ नील्योषधि । अन्यत्राट् । नीला मेघमाला ॥

३२४ आर्यक्षत्रियाद्वाऽऽन् ।१।३।४८। आर्यक्षत्रियशब्दाभ्यां स्त्रियामान्प्रत्ययो वा भवति ॥ नान्तत्वे ङी । पक्षे आट् । आर्याणी आर्या । क्षत्रियाणी क्षत्रिया ॥

३२५ धवाद्योगादज्येष्ठादिभ्यः ।१।३।४९। धववाचिनो यो गाचत्सम्बन्धात् स्त्रियां वर्तमानाच्छब्दात् ङी भवति न ज्येष्ठादिभ्य ॥ गणकस्य भार्या गणकी क्षत्रियस्य भार्या क्षत्रियी । अज्येष्ठादिभ्य इति किं[२] ज्येष्ठस्य भार्या ज्येष्ठा । एव कनिष्ठा ॥

१ पतिरस्यातीति पतिवत्नी विवाहात्सभर्तृमती । उदरान्तरे गर्भोऽस्या अस्तीत्य त वत्नी गर्भिणी । एतौ मतुप्रत्ययान्तौ निपात्येते ॥ अन्यत्र पतिमती भूमि । अन्तरम स्यां शालायां वतने इति अन्तरवती शाला ॥

२ अयते गम्यते गुणैर्गुणवद्भिरिति वा आय । क्षतादपायात्त्रायत रक्षतीति क्षत्र क्षत्रस्यापत्य पुमान् क्षत्रिय । पुनर्द्वन्द्व । अधवयोगेऽय विधि । धवयोगे तु परत्वात् ङी आर्यी क्षत्रियी । आर्याणी स्वयमार्या स्यात्क्षत्रिया क्षत्रियाण्यपि । अत आर्यस्य भार्या क्षत्रियस्य भार्या इति वा नार्थ । स्वयमेवार्या स्वयमेव क्षत्रिया इत्यर्थ ॥

३२६ **पूतक्रतुवृषाकपिकुसितकुसीदादैच्** च ।१।३।५०। पूतक्रत्वादिभ्यो धवयोगात् स्त्रिया वर्तमानेभ्यो ङी भवति तेषामैच् चादेश ॥ च इत् आदेशत्वज्ञापनार्थं । आय् । पूतक्रतोर्भार्या पूतक्रतायी । एवमग्नायी वृषाकपायी कुसितायी कुसीदायी ॥

३२७ **मनोर्वा** **ऐच्** ।१।३।५१। मनुशब्दाद्धवयोगात् स्त्रिया ङी वा भवति ऐचान्तादेश ॥ च इत् । मनायी मनावी मनु ॥

३२८ **मातुलाचार्योपाध्यायादान्** च ।१।३।५२। मातुलादिभ्यो धवयोगात् स्त्रिया ङी आन् च भवतो वा ॥ नान्तत्वे पुनर्ङी पक्षे आड् । मातुलस्य भार्या मातुली मातुलानी मातुला । एवम् आचार्यी आचार्यानी । क्षुभ्नादित्वान्न णत्व । आचार्या उपाध्यायी उपाध्यायानी उपाध्याया ॥

३२९ **वरुणेन्द्रमृडभवशर्वरुद्रादान्** ।१।३।५३। वरुणादिभ्यो धवयोगे स्त्रिया नित्यमान् भवति ॥ ङी । वरुणस्य भार्या वरुणानी । एवमिन्द्राणी मृडानी भवानी शर्वाणी रुद्राणी ॥

३३० **हिमारण्यादुरौ** ।१।३।५७। उरौ महत्त्वर्थे वर्तमानाभ्या हिमारण्यशब्दाभ्या स्त्रियामान् भवति ॥ ङी । उरु हिम हिमानी । उर्वरण्यमरण्यानी ॥

३३१ **वेदक्तिनो** **ङी** ।१।३।५८। स्त्रियामिदन्ताद् ङी वा भवति न क्तिन ॥ दीर्घ । शक्ति शक्ती । यष्टि यष्टी । अङ्गुलि अङ्गुली । अक्तिन इति किं[1] कृति बुद्धि ॥

---

१ वा इदक्तिन ङी इति पदच्छेद । वा इति विकल्पार्थ । इदक्तिन इति न विद्यत क्तिन् यस्य स अक्तिन् इकारमात्र इत् इश्चासावक्तिन् च इदक्तिन् तस्मादिदक्तिन । क्तिन्प्रत्ययरहितेकारान्तात् स्त्रियो ङी वा भवतीत्यर्थ । इदिति किं धेनु । तत्र किं सेनानी स्त्री । क्तिन्निति नकार किं 'नाम्नि क्ति' इति क्तिप्रत्ययान्ताभिधेयार्थं क्तिमन्तात्प्रत्ययं च न ग्रहणम् ॥ शक्तिरिति स्थिते तस्मात् ङीप्रत्यय । शक्न शक्ती ॥ पूर्वा ङ प्रत्ययो व्यवहित इति ङीग्रहणम् ॥

स्वार्थे टीकण् वा भवति न विद्यायाम् ॥ द्वितीयमेव द्वैतीयीक । तार्तीयीकम् । अविद्यायामिति किं? । द्वितीया तृतीया विद्या ॥

**१०६८ ञोऽष्टमाद्भागे** ।३।४।११८। अष्टमात् स्वार्थे ञो वा भवति भागे वाच्ये ॥ अष्टम एव आष्टमो भाग । अष्टमो वा ॥

**१०६९ षष्ठात्** ।३।४।११९। षष्ठात् स्वार्थे ञो वा भवति भागे वाच्ये ॥ षष्ठ एव षाष्ठो भाग । षष्ठो वा ॥

**१०७० एकादाकिश्चासहाये** ।३।४।१२१। असहाये वर्तमाना देकशब्दादाकिन् कश्च वा भवत ॥ एक एव एकाकी । एकक ॥

**१०७१ मृदस्तिक** ।३।४।१२३। मृद स्वार्थे तिको भवति ॥ मृदेव मृत्तिका ॥

**१०७२ सस्नौ प्रशस्ते** ।३।४।१२४। प्रशस्ते मृद सस्नौ भवत ॥ प्रशस्ता मृत् मृत्सा । मृत्स्ना ॥

**१०७३ बहुल घतोर्द्वयसद्मात्रट्** ।३।४।१२५। घत्वन्तात् स्वार्थे द्वयसट् मात्रट् बहुल भवत ॥ यावितौ । यावदेव यावद्द्वयस यावन्मात्रम् । एव तावद्द्वयस तावन्मात्रम् इत्यादि ॥

**१०७४ वर्णात् कार** ।३।४।१२६। वर्णवाचिन स्वार्थे कारो भवति ॥ अ एव अकार । एव ककार वकार चकार स्यात्कार इत्यादि ॥

**१०७५ भेषजादिभ्योऽप्येव्भ्यष्ठण्ठ्छत्तल** ।३।४।१२७।

---

१ एकादिभि क्षुद्रजितम् । असहाय इति किं? एके आचार्या । एक द्वौ बहव ॥

२ तिक त्यक्त्वा तक कृत्वा आकारत्वे क्रियमाणे प्रक्रियागौरवम् । पञ्चभि मृत्तिकाभि क्रीत पञ्चमृत्तिक इत्याद्यभावे इत्त्वाभावश्च स्यादिति तिको विधीयते ॥

३ रूपापि प्राप्तेऽय विधि । तत्र केचिद्रूपप्बाधन नेच्छन्ति । तन्मोत्तर बहुलग्रहण मत्रापि सम्बध्य । मद्रूपा ॥

४ इतिहेति निपातनसमुदाय उपदेशपारम्पर्ये वर्तते । पारम्पर्योपदेश स्यादैतिह्यमि त्यव्ययमित्यमर । भेषजादय शिष्टेभ्योऽवगन्तव्या । बहुवचन भेषजादेराकृतिगणत्वा र्थम् ॥ वचनभेदेऽपि याथाकाम्य अ यथा होत्रादेराबेव भेषजाद्या विज्ञायेयातामम रामोप या ॥

भेषजादिभ्य स्वार्थे ष्यण् भवति । होत्राया छ देवात्तल् ॥ भेषजमेव भैषज्यम् । एवमेतिह्य चातुर्वर्ण्य त्रैलोक्य त्रैकाल्य षाड्गुण्य चातुर्मास्य शैल्य । स्त्रिया शैलीत्यादि । होत्रैव होत्रीय । देव एव देवता ॥

**१०७६ नामरूपभागाद्धेयम्** ।३।४।१२८। नामादिभ्य स्वार्थे धेयो भवति ॥ नामैव नामधेय । रूपधेय । भागधेय ॥

**१०७७ मर्तादिभ्यो यः** ।३।४।१२९। मर्तादिभ्य स्वार्थे यो भवति ॥ मर्त एव मर्त्य । सूर एव सूर्य । क्षेम एव क्षेम्य । भाग एव भाग्यमित्यादि ॥

**१०७८ नवात्नतनखं च नू च** ।३।४।१३०। नवशब्दात् स्वार्थे त्नतनखा यश्च वा भवन्ति तस्य नू इत्यादेशश्च ॥ नवमेव नूत्न । नूतन । नवीन । नव्य ॥

**१०७९ प्रात्पुराणे** ।३।४।१३१। पुराणेऽर्थे वर्तमानात् प्रात् त्नतनखा भवन्ति ॥ प्रत्न । प्रतन । प्रीण पुराणमित्यर्थ ॥

**१०८० प्रज्ञादिभ्योऽण्** ।३।४।१३२। प्रज्ञादिभ्य स्वार्थे अण् वा भवति ॥ प्रज्ञ एव प्राज्ञ । वणिगेव वाणिज । अन्त एव आन्त । कर्मैव कार्मणमित्यादि ॥

**१०८१ वाचष्ठण्** ।३।४।१३५। वाच सन्दिष्टेऽर्थे ठण् भवति ॥ सन्दिष्टा वाक् वाचिक ॥

---

१ प्रगत कालेन पुराणम् ॥

२ वाचिक कथयति सन्दिष्टा वाच कथयतीत्यर्थ । सन्दिष्टेति किं विना वाक् दत्तस्य । वाऽधिकारेऽपि नित्यमेव प्रत्ययोऽन्यथा सन्दिष्टावाग्प्रतीत ॥

**१०८२ विनयादिभ्य** ।३।४।१३६। विनयादिभ्य स्वार्थ ठण् भवति ॥ विनय एव वैनयिक । समय एव सामयिकम् इत्यादि ॥

**१०८३ औपयिकम्** ।३।४।१३७। उपाय एव औपयिकम् इति निपात्यते ॥

॥ इति तद्धितसङ्ग्रह ॥

श्रीमन्नम्रसुरासुराधिपचलन्मौलिप्रभाम्बन्मणि-
श्रेणिश्राणितसन्ततार्घ्यविभवो यत्पादपीठीतट ।
वाचोयुक्तिविविक्तजन्तुविसरो दुष्कर्मनिर्मूलनो
जीयात्सूरिसुभाषितार्चितमह सोऽय जिनेन्द्रप्रभु ॥ १ ॥

॥ प्रक्रियासङ्ग्रहे पूर्वार्द्ध सपूर्णम् ॥



# अशुद्धिशोधनम्

| नम् | पंक्ति | अशुध्दम् | शुध्दम् |
|---|---|---|---|
| ३ | १४ | भवति | भवतो |
| ३ | १८ | अस्वरस | अस्वस |
| ११ | १४ | द्वी करोति | द्वि करोति |
| १२ | १२ | प्रत्येये | प्रत्यये |
| १४ | ७ | पदन्ते | पदान्ते |
| १९ | २४ | आश्रयणेण | आश्रयणेन |
| ३० | ३ | समाम | सामाम |
| ३० | २५ | त्यया | त्यदा |
| ३७ | १४ | सखित | सर्खात |
| ३८ | १३ | प्रत्येऽसु | प्रत्ययेऽसु |
| ३८ | २५ | णिञ् | णीञ् |
| ४६ | १ | सर्वा | सर्वा |
| ४६ | १२ | अमुभ्य | अमूभ्य |
| ४८ | ३ | इकान्त | इकारान्त |
| ४९ | २१ | वाम् श | वाम्श |
| ५१ | १७ | स्वदय | स्वादय |
| ५५ | १३ | अमन्त्रण | आमन्त्रण |
| ६१ | १६ | प्रदमा | प्रदामा |
| ६७ | ३ | ठकारन्तो | ठकारान्तो |
| ८२ | १३ | वसस्रादि | वंस्नसादि |
| ८३ | १० | द्रयाचक्रे | दयाचत्रे |
| १०९ | १२ | नञ् दुम् | नञ् दुसुसु |
| ११४ | १० | बहिष्पर्यपाडन् | बहिष्पर्यपाड् च |

| पत्रम् | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १४८ | २५ | क्रातिकीक | क्रातिनिक |
| ,, | ,, | श्रावणीको | श्रावणिक |
| १५१ | १६ | दक्षिणात्य | दाक्षिणात्य |
| १५४ | १७ | प्रागेतन | प्रगेतन |
| १६७ | २६ | महामुनो | महामुनौ |
| १७६ | १४ | प्रियम्थि०— वहल | वहुल |
| १८८ | ३ | प्रनाश्रद्धा० | प्रज्ञाश्रद्धा |
| ,, | २१ | स्वाङ्गाद्धी० | स्वाङ्गाद्धी |
| १९० | १० | मस्वर्थे | मत्वर्थे |
| १९२ | २९ | श्राद्धीक | श्राद्धिक |
| १९५ | १ | दश | देश |
| , | ४ | शब्दादद्भवति | शब्दादाद्भवति |
| १९७ | १० | अमीसात् | अभिसात् |
| २०० | १३ | विमनि न | निमनि च |

॥ श्रीरस्तु ॥

सुरासुरनराधीशमौलिमालार्चितक्रमम् ॥
आख्यातसर्वतत्त्वार्थं सर्वज्ञं जिनमाश्रये ॥ १ ॥

## ॥ अथ तिङन्तसंग्रहोऽभिधीयते ॥

तद्यथा ॥ भू सत्तायां । भू इत्ययं शब्दः सत्तायामर्थे वर्तते ॥

**१०८४ क्रियार्थो धातुः** ।१।१।२२। क्रिया परिणतिः प्रवृत्तिर्वा सा अर्थो वाच्यो यस्य स शब्दो धातुसंज्ञो भवति ॥ "स्मे च लट् ।४।३।२१५।" इत्यधिकृत्य ॥

**१०८५ सति** ।४।३।२१७। वर्तमानार्थे वर्तमानाद्धातोर्लट्प्रत्ययो भवति ॥ अटावितौ । अकारो 'लिटो लटो वेति' विशेषणार्थं । टकार 'ए टित' इति विशेषणार्थं ॥

**१०८६ कृल्योऽतुन्त्वाम्** ।४।३।४५। कृतो लकाराश्च कर्तरि भवन्ति न तुन्त्वाम ॥ एकद्विबहावित्यधिकृत्य ॥

**१०८७ लोऽन्ययुष्मदस्मासु तिसम्झिसिप्थस्थमिब्वस्मस्** ।१।४।१। अन्ययुष्मदस्मदर्थेषु प्रत्येकमेकद्विबहुषु वर्तमानाद्धातोर्लस्य यथासंख्यं तिप् तस् झि सिप् थस् थ मिप् वस् मस् इत्यादेशा भवन्ति ॥ प इत् शल्यव्लाविति विशेषणार्थं ॥

**१०८८ कर्तरि शप्** ।४।३।२०। धातोः कर्तरि शिति लेटि लेङि लटि लङि च मध्ये शप् भवति ॥ शपावितौ । शकार 'एचोऽश्या' इति विशेषणार्थं । पकार पूर्ववत् ॥

---

१ अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्विलमरः ॥ पूर्वापरीभूता साध्यमानरूपा प्रतिपत्तिः क्रिया । परिणाम इत्यर्थः । पूर्वोत्तराकारपरिहारावाप्तिस्थितिलक्षणा परिणतिः शिष्टप्रयोगानुसारित्वालक्षणस्य । पूर्वापरीभूता अवयवक्रिया समुदायरूपा पाकादि ॥

२ आरब्धापरिसमाप्तिर्वा वर्तमानः । प्रवृत्तोपरतश्चैव वृत्ताविरत एव च ॥ नित्यप्रवृत्तः सामीप्यो वर्तमानश्चतुर्विधः ॥ १ ॥ मांसं न खादति । बालाः क्रीडन्ति । मेरुस्तिष्ठति । सिद्धो भवति ॥

**१०८० अरिङ्लुग्घेतौ** ।४।२।१७। पूर्वस्यैक एङरो भवति धातोर्विहिते प्रत्यये परे न क्ङिति ङिति लुग्धेतो च ॥ इत्येद् अव्॥

**१०९० झोऽन्तः** ।१।४।८८। धातोर्लादेशस्य झ अन्तो भवति ॥ अदित् एद इत्यतो टुक् ॥

**१०९१ आद्यव्यतः** ।४।२।३४। धातोर्भवादौ लिवर्जितलादेशे पूर्वस्यात आद्भवति ॥ सुङ् पदमिति पदत्वाद्रित्यादि । स भवति । तौ भवत । ते भवन्ति इति प्रथमपुरुष ॥ त्व भवसि । युवा भवथ । यूय भवथ इति मध्यमपुरुष ॥ अह भवामि । आवा भवाव । वय भवाम इत्युत्तमपुरुष ॥ अन्यायप्रयोगेऽपि । भवति भवत भवन्ति । भवसि भवथ भवथ । भवामि भवाव भवाम ॥ भवच्छब्दप्रयोगेऽपि प्रथमपुरुष एव तस्य पूज्यार्थवाचकत्वात् । भवान् भवति । भवन्तौ भवत । भवन्तो भवन्ति ॥ एव वदव्यक्ताया वाचि । अन्ति । वदति वदत वदन्ति इत्यादिपरस्मैपदिधातव शब्विकरणा सर्वेऽपि नेतव्या ॥ टुनदु समृद्धो ॥ टुशब्दोनावितौ ॥

**१०९२ उदित** ।४।२।१९७। उदितो धातोर्नम् भवति ॥ अमावितो । मित्त्वादन्त्यादच परो भवति शेष प्राग्वत् । नन्दति नन्दत नन्दन्तीत्यादि ॥ एव चटु दीप्तिह्लादनयो । चन्दति चन्दत चन्दन्तीत्यादि ॥ एधि वृद्धो । इदित् प्राग्वद्धातुसज्ञायाम् । सतीति ल्ट् ॥

**१०९३ ताताझथामाथाध्वमिल्वहिमहिङ्ङिदिच्छीयसक्ष्णर्वपस्कुनिविश** ।१।४।२। ङित इदित शीयादेशात् सक्ष्णु अपस्कु निविश् इत्येतेभ्यश्च धातुभ्य परस्य ल अन्ययुष्मदस्मासु प्रत्येकमेकद्विबहुषु यथासङ्ख्य त आता झ थास् आथा ध्वम् इङ् वहि महिङ् इत्यादेशा भवन्ति ॥ लङावितौ । लकारो रत्नो झेलोरिति विशेषणार्थ । इकार सुङिति प्रत्याहारार्थ । शप् ॥

---

१ सम्पूर्वं क्ष्णु तेजने । अपपूर्वस्कगमयुक्त कृ विक्षेपे । निपूर्वो विश् प्रवेशने ॥

**१०९४ टित:** ।१।४।९२। धातोष्टिल्लादेशस्य तङ एद्भवति ॥ पञ्चस्यास्थानेऽन्तेऽल इत्यन्तादेश ॥

**१०९५ थासोमो गेश्** ।१।४।९३। टितो लस्तङो थहेरित आमश्च गेश् भवति ॥ गशावितौ । गकारो गित इति सन्धिप्रतिषेधार्थ । शकार सर्वादेशार्थ ॥

**१०९६ आतोऽप'** ।४।२।३६। धातोर्लिवर्जितलादेशस्य आत अत. परस्य इय् भवति न पित ॥ दुम्व्योर्वल्क्याविति यलुट् । एद् । झोऽन्त ॥

**१०९७ थासस्से** ।१।४।९५। टितो लस्थासस्से भवति ॥ ध्वमिलो-रति एद इति लुट् । मवयोरात् । एधते एधेते एधन्ते । एधसे एधेथे एधध्वे । एधे एधावहे एधामहे ॥ एव स्पर्धि सङ्घर्षे ॥ स्पर्द्धते स्पर्द्धेते स्पर्द्धन्ते ॥ वदुङ् स्तुत्यभिवादनयो ॥ उङावितौ । वन्दते वन्देते वन्दन्ते इत्यादि आत्मनेपदिधातवोऽन्येऽपि नेतव्या ॥ डुपचीप् पाके । डुशब्दे-कारपकारा इत पूर्ववल्लडादय । पचति पचत पचन्ति । पचसि पचथ पचथ । पचामि पचाव पचाम ॥

**१०९८ ञीदिदपवदाज्ञुपसर्गज्ञ'** ।१।४।६६। ञित ईदित अपवद अनुपसर्गस्य जानातेर्धातोर्ले कर्तरि फलेशे तङ् भवति ॥ शेष माग्वत् । पचते पचेते पचन्ते । पचसे पचेथे पचध्वे । पचे पचावहे पचामहे ॥ एव णीञ् प्रापणे । ञ इत् फलेशे तङर्थ ॥

**१०९९ आदे' ष्णोऽष्वैक्ष्वष्ठ्याष्टीव. स्नम्** ।४।२।६१। धातोरादे' षस्य सो भवति णस्य न न ष्वक्ष्याष्ठीवाम् ॥ पूर्ववल्लडादि । जित्वादुभयपदित्व । नयति नयत नयन्तीत्यादि । नयते नयेते नयन्ते इत्यादि ॥

---

१ थहेरि यहा स च आम् च तस्य । 'ए टित' इत्यनेनैव थहेरित एद्भवति तथापि गेश् विधान सन्धिनिषेधायम् । अन्यथा सन्धिर्भवत्येव । शकार सर्वादेशाय । आमो यथा सर्वादेशस्तथा थहेरपि प्रसगे थहेरिरिति इत्यारम्भ ॥

२ ष्वष्क गतौ । ष्ट्यै स्त्यै सघात च । ष्ठीवु निरसने ॥

सुनुत। सुनवानि सुनवाव सुनवाम॥ अश्नुताम् अश्नुवाताम् अश्नुवताम्। अश्नुष्व अश्नुवाथाम् अश्नुध्वम्। अश्नवै अश्नवावहै अश्नवामहै॥ चिनोतु चिनुताद्वा चिनुताम् चिन्वन्तु। चिनु चिनुताद्वा चिनुतम् चिनुत। चिनवानि चिनवाव चिनवाम॥ चिनुताम् चिन्वाताम् चिन्वताम्। चिनुष्व चिन्वाथाम् चिनुध्वम्। चिनवै चिनवावहै चिनवामहै॥ लिङ्॥ सुनुयात् सुनुयाताम् सुनुयुः। सुनुयाः सुनुयातम् सुनुयात। सुनुयाम् सुनुयाव सुनुयाम॥ अश्नुवीत अश्नुवीयाताम् अश्नुवीरन्। अश्नुवीथाः अश्नुवीयाथाम् अश्नुवीध्वम्। अश्नुवीय अश्नुवीवहि अश्नुवीमहि॥ चिनुयात् चिनुयाताम् चिनुयुः। चिनुयाः चिनुयातम् चिनुयात। चिनुयाम् चिनुयाव चिनुयाम॥ चिन्वीत चिन्वीयाताम् चिन्वीरन्। चिन्वीथाः चिन्वीयाथाम् चिन्वीध्वम्। चिन्वीय चिन्वीवहि चिन्वीमहि॥ डुक्रीञ् द्रव्यविनिमये॥ डुञावितौ प्राग्वल्लडादि॥

११४९ **क्र्यादेः** ।४।३।३०। क्र्यादिभ्यो धातुभ्यः कर्तरि श्ने ले श्नाप्रत्ययो भवति॥ श इत्। शित्त्वान्नेट्। हलादौ। हल्यघोरीरिति ईत्। अच्यातो लुक् णत्व। क्रीणाति क्रीणीतः क्रीणन्ति। क्रीणासि क्रीणीथः क्रीणीथ। क्रीणामि क्रीणीवः क्रीणीमः॥ वृङ् सम्भक्तौ॥ ङ इत्। लडादि। वृणीते वृणाते वृणते। वृणीषे वृणाथे वृणीध्वे। वृणे वृणीवहे वृणीमहे॥ ग्रही उपादाने। ईदित्। लडादि॥

११५० **वशिव्यचिव्यधिज्याग्रहिव्रश्चिप्रच्छिभ्रज्जां क्ङिति** ।४।१।११६। वश्यादीनां किति ङिति च प्रत्यये परे साचो यञ इग्भवति॥ शेषं प्राग्वत्। गृह्णाति गृह्णीतः गृह्णन्ति। गृह्णासि गृह्णीथः गृह्णीथ। गृह्णामि गृह्णीवः गृह्णीमः॥ गृह्णीते गृह्णाते गृह्णते। गृह्णीषे गृह्णाथे गृह्णीध्वे। गृह्णे गृह्णीवहे गृह्णीमहे॥ लङि॥ अक्रीणात् अक्रीणीताम् अक्री-

१ स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कोः श्ना च ।४।३।२९। इत्यपि द्रष्टव्यम्॥
२ वश कान्तौ। व्यचू व्याजीकरणे। व्यध ताडने। ज्या वयोहानौ। ग्रही उपादाने। ओव्रश्चू छेदने। प्रच्छ ज्ञीप्सायाम्। भ्रस्ज पाके॥

णन् । अक्रीणा अक्रीणीतम् अक्रीणीत । अक्रीणाम् अक्रीणीव अक्रीणीम ॥ अवृणीत अवृणाताम् अवृणत । अवृणीथा अवृणाथाम् अवृणीध्वम् । अवृणि अवृणीवहि अवृणीमहि ॥ अगृह्णात् अगृह्णीताम् अगृह्णन् । अगृह्णा अगृह्णीतम् अगृह्णीत । अगृह्णाम् अगृह्णीव अगृह्णीम ॥ अगृह्णीत अगृह्णाताम् अगृह्णत । अगृह्णीथा अगृह्णाथाम् अगृह्णीध्वम् । अगृह्णि अगृह्णीवहि अगृह्णीमहि ॥ लेटि । क्रीणातु क्रीणीताद्वा क्रीणीता क्रीणन्तु । क्रीणीहि क्रीणीताद्वा क्रीणीत क्रीणीत । क्रीणानि क्रीणाव क्रीणाम ॥ वृणीता वृणाता वृणता । वृणीष्व वृणाथा वृणीध्व । वृणै वृणावहै वृणामहै ॥

११९१ **हलः श्नः शानज्झौ**[1] ।४।३।३१। हलन्ताद्धातो परस्य श्न हौ परे शानो भवति ॥ अतो ह इति हेर्लुक् । गृहाण गृह्णीताद्वा गृह्णीता गृह्णन्तु । गृहाण गृह्णीताद्वा गृह्णीत गृह्णीत । गृह्णानि गृह्णाव गृह्णाम ॥ गृह्णीता गृह्णाता गृह्णता । गृह्णीष्व गृह्णाथा गृह्णीध्व । गृह्णै गृह्णावहै गृह्णामहै ॥ लेङि ॥ क्रीणीयात् क्रीणीयाता क्रीणीयु । क्रीणीया क्रीणीयात क्रीणीयात । क्रीणीया क्रीणीयाव क्रीणीयाम ॥ वृणीत वृणीयाता वृणीरन् । वृणीथा वृणीयाथा वृणीध्व । वृणीय वृणीवहि वृणीमहि ॥ गृह्णीयात गृह्णीयाता गृह्णीयु । गृह्णीया गृह्णीयात गृह्णीयात । गृह्णीया गृह्णीयाव गृह्णीयाम ॥ गृह्णीत गृह्णीयाता गृह्णीरन् । गृह्णीथा गृह्णीयाथा गृह्णीध्व । गृह्णीय गृह्णीवहि गृह्णीमहि ॥ तुदी व्यथने ॥ इदित् लडादि ॥

११९२ **तुदादिभ्यः शः** ।४।३।३२। तुदादिभ्य कर्तरि श्लेले शो भवति ॥ श इत् ॥

---

1 श्नाप्रत्ययस्य हौ परे शानादेशो भवति । हल इति किं? क्रीणीहि । श्न इति किं? स्तभुहि । स्तुभुहि । श्न इति स्थानिनिर्देश आदेशस्य प्रत्ययार्थ । इतरथा हि शपवि षय नियमविषयो वा प्रत्ययो विज्ञायेत । हाविति किं? स्तभ्नाति ॥

११५३ **हस्वस्य हल** ।४।२।१८। हलन्तस्य धातोर्ह्रस्वस्यैक गुणो भवति अक्ङित्लुग्वेतौ प्रत्यये परे ॥ इति प्राप्तौ गिति ङिद्वद्भावाद्गुण् न भवति। शेष प्राग्वत् । तुदति तुदत तुदन्तीत्यादि ॥ मृ प्राणत्यागे ॥

११५४ **म्रियतेर्लुङ्लिङ्लले**[1] ।१।४।१६। म्रियते परेषां लुङ् लिङ्लृङ्लङ्लेट्लोङां तङो भवति ॥

११५५ **रि** ।४।२।१५। धातो ऋत यङ्चक्यारशेषु रिर्भवति ॥ श्रूह्रन्तीति इय् । म्रियते म्रियेते म्रियन्ते । म्रियसे इत्यादि ॥ मुच्लृत् मोक्षणे ॥ लजावितौ ॥

११५६ **लिंपादितृफदृफगुफोम्भशुम्भः शे** ।४।२।१०८। लिपादीनां तृफादीनां च धातूनां शे परे नम् भवति ॥ अमावितौ । मित्त्वादन्त्याच्च पर मामिति नस्य ञ । मुञ्चति मुञ्चत मुञ्चन्ति इत्यादि । मुञ्चते मुञ्चेते मुञ्चन्ते इत्यादि । लङि । अतुदत् अतुदताम् अतुदन् इत्यादि । अम्रियत अम्रियेताम् अम्रियन्त इत्यादि । अमुञ्चत् अमुञ्चताम् अमुञ्चन् इत्यादि । अमुञ्चत अमुञ्चेताम् अमुञ्चन्त ॥ लेटि ॥ तुदतु तुदताद्वा तुदता तुदन्तु इत्यादि । म्रियता म्रियेता म्रियन्ताम् इत्यादि । मुञ्चतु मुञ्चताद्वा मुञ्चता मुञ्चन्तु इत्यादि । मुञ्चता मुञ्चेता मुञ्चन्ताम् इत्यादि॥ तुदेत् तुदेता तुदेयु इत्यादि । म्रियेत म्रियेयाता म्रियेरन् इत्यादि॥ मुञ्चेत् मुञ्चेता मुञ्चेयु इत्यादि । मुञ्चेत मुञ्चेयाता मुञ्चेरन् ॥ तनूञ् विस्तारे ॥ ऊञावितौ ततो लङादि ॥

---

१ हस्वस्येति ग्रहण किं? पूरयति । कीर्तयति ॥ अक्ङित्लुग्वेताविति किं? भिन्न भिन्नवान् । गुत्वा गुत्वानौ गुत्वान । वभिद ॥ अक्ङित्लुग्वेतुरिति प्रसज्यप्रतिषेधादिह न भवति अनृच्छान् । हल इत्युत्तरार्थमिह हि पूर्वेणाव्यवहितस्य सिद्धे व्यवहितार्थमेत दिति विज्ञायते । एकदेशव्यवधानकृतार्थत्वाद्विधेरनेकवर्णव्यवधाने न भवति भिक्षते सञ्चुक्षत भिनत्ति ॥ इको धातुनेह विशेषणादिह न भवति अकणिष अरणिताश्च रणिताश्व ॥

२ तृफ तृम्फ तृप्तौ । दृफ दृम्फ उत्क्लेशे । गुफ गुम्फ ग्रथने । उभ उम्भ पूरणे शुभ शुम्भ शोभार्थे । लिपादिग्रहण किं? तुदति । तृफादीनां शे नस्य लुगिति तृफादीनां नम्वचनं । शे इति किं? त्रेप्ता त्रेप्तुम् ॥

११५७ **कृञ्तनादेरुः** ।४।३।२३। कृञस्तनादिभ्यश्च श्लेले उर्भवति ॥ पित्वेट् । म्वि इत्येति मवयोरतो वा लुक् । तनोति तनुत तन्वन्ति इत्यादि ॥ मनूङ् बोधने ॥ ऊङावितौ लडादि ङित्त्वादङ् । मनुते मन्वाते मन्वते इत्यादि ॥ डुकृञ् करणे । डुञावितौ लडादि अरि ॥

११५८ **अत शि चोत्** ।४।२।४३। कृञोऽत उद्भवति शित्यपिति यि च लिर्याच्नलादेशे च परत ॥ अपिति ङित्त्वान्नेट् ॥

११५९ **कुर्यि च** ।४।२।४२। कृञ परस्योतो लुगित्य भवति मवादावपिति यि च लिवाजितलादेशे परत ॥ करोति कुरुत कुर्वन्ति । करोषि कुरुथ कुरुथ । करोमि कुर्व कुर्म ॥ कुरुते कुर्वाते कुर्वते । कुरुषे इत्यादि ॥ लङि । अतनोत् अतनुताम् अतन्वन् इत्यादि ॥ अमनुत अमन्वाताम् अमन्वत इत्यादि ॥ अकरोत् अकुरुताम् अकुर्वन् इत्यादि ॥ अकुरुत अकुर्वाताम् अकुर्वत इत्यादि ॥ लेटि । तनोतु तनुताद्वा तनुता तन्वन्तु इत्यादि॥ मनुता मन्वाता मन्वता इत्यादि ॥ करोतु कुरुताद्वा कुरुता कुर्वन्तु इत्यादि॥ कुरुता कुर्वाता कुर्वताम् इत्यादि ॥ लेङि ॥ तनुयात् तनुयाता तनुयु इत्यादि ॥ मन्वीत मन्वीयाता मन्वीरन् इत्याद ॥ कुर्यात् कुर्याता कुर्यु इत्यादि ॥ कुर्वीत कुर्वीयाता कुर्वीरन् इत्यादि ॥ रुधन् आवरणे ॥ ऊञावितौ । ल्डादि ॥

११६० **रुधांन्नम् न्लुक् च** ।४।३।२४। रुधादीना कर्तरि श्लेले नम् भवति तेषा नम्य लुक् च भवति ॥ शपोऽपवाद म इत् ॥

११६१ **अध** ।१।२।८०। अधाओ झषन्ताद्धातो परयोस्तथयोर्धो भवति ॥ जश्त्व ॥

११६२ **नमेस्त्योर्लुक्** ।४।२।८६। नम्विकरणम्य अस्तेश्च धातोरत

१ षष्ठी यत्वचनम् मन्मा इत्स्तावात परस्याऽनुनासिक. । "धादीना धातूना कर्तरि श्ल नम् भवति । नकारस्य च लुक् । मित्वादयमन्त्यादच परा वेदितव्य । नमो मकारम्य विधानसामर्थ्यात् लुग भवति । अय "पस्तेरेकाय बाह्यक" ॥

२ अपितीति किं? रुणद्धि । अत इति किं? अन्त्यस्य मा भूत् । तकार किं? धात्वो आमर् ॥ 'न र जर स्वेषा ।१।१।१२२। इत्यत्तस्य स जरि परे रूपभवति वा ॥ निन्त'

णित्यपिति यि च लोपे परे डुग् भवति ॥ चर्त्वं च । रुणद्धि रुन्द्धः रुन्धन्ति । रुणत्सि रुन्द्धः रुन्द्ध । रुणध्मि रुन्ध्वः रुन्ध्मः ॥ भुज पालना भ्यवहारयोः ॥ अदिम ॥

११६३ शपनाथशिक्षभुजादुपलम्भनाशीर्जिज्ञासात्राणे ।१।४।१२। शपो लस्तङ् भवति उपलम्भने नाथ आशिषि शिक्षो जि ज्ञासायां भुजोऽत्राणे ॥ इत्यपात्रे तङ् तुल्यादि शेषं प्राग्वत् । भुङ्क्ते भुञ्जाते भुञ्जते । भुङ्क्षे भुञ्जाथे भुङ्ग्ध्वे । भुञ्जे भुञ्ज्वहे भुञ्ज्महे ॥ युजूंन् योगे । ऋकारानितौ पूर्ववत्प्रक्रिया । युनक्ति युङ्क्तः युञ्जन्ति । युनक्षि युङ्क्थः युङ्क्थ । युनज्मि युञ्ज्वः युञ्ज्मः ॥ युङ्क्ते युञ्जाते युञ्जते । युङ्क्षे युञ्जाथे युङ्ग्ध्वे । युञ्जे युञ्ज्वहे युञ्ज्महे ॥ लङि ॥

भिन्ताम् । भिन्त । स्व इति किं? तृण्वा । इति चिन्तामणावुक्तम् । रुन्द्धः इत्यत्र नो ऽन्यपदात् इति सूत्रे बहुवचनात् णत्वं बाधित्वा पदान्ते नकारमकारयोः परस्वोऽनुस्वारो भवति अयि परे । विसम्भं गत्यादिवत् । पुनणत्वं प्राप्तं तद्बाधनो विधिः स्थित एव ॥

१ शप नाथ शिक्ष भुज इत्येतेभ्यो यथासंख्यं उपलम्भन आशिषि जिज्ञासायां अत्राणे च लकारस्य पूर्वात्मडो भवति ॥ शप उपलम्भने उपलम्भनं प्रकाशनं देवदत्ताय शपते जिनदत्ताय शपते देवदत्तं प्रकाशयति एवंभूतोऽस्मीति देवदत्तमाचष्ट इत्यर्थः । अथवा स्वाभिप्रायस्य परत्राविष्करणमुपलम्भनं शपथः । देवदत्ताय शपते इति वाचामात्रेण शरीरस्पर्शनेन वा देवदत्ते स्वाभिप्रायमाविष्करोतीत्यर्थः ॥ प्रोषितस्य वा भावाभावयोरुपलब्धव्ययो कस्यचिदाप्तवचनमुपलम्भनं । देवदत्ताय शपते इति शपते देवदत्ते तस्य भावाभावयोरुपलब्धव्ययोः कञ्चिदाप्तवत इत्यर्थः ॥ उपलम्भने इति किं? देवदत्तं शपति आक्रोशतीत्यर्थः ॥ आशिषि नाथ सर्पिषो नाथते सर्पिर्मे भूयादित्याशास्तीत्यर्थः । आशिषीति किं? मधु नाथति माणवकमुपनाथते इति याच्ञा या न भवतीत्यर्थः । शिक्षो जिज्ञासायां विद्या शिक्षते विद्यां जिज्ञासयितुमात्मनः शक्तिमिच्छतीत्यर्थः । जिज्ञासायामिति किं? भोक्तुं शिक्षति । शिक्षेति शक्तः सन्नन्तस्येदं ग्रहणमकारान्तस्य । न शिक्षि विद्योपादाने इत्यस्य ॥ भुजादत्राणे ओदनं भुङ्क्ते उप भुङ्क्ते परिभुङ्क्ते । अत्राण इति किं? पृथिवीं भुनक्ति । त्राणं पालनं तत्र प्रतिषेध अन्यत्र सर्वत्र तङ् तेन 'अम्बरीषश्च नाभागो बुभुजाते चिरं महीम् ।' इत्ययुक्तम्? नात्र हि पालनं विवक्षितं किं तर्हि तदाश्रय उपकारः ॥ अनेकार्थाश्च धातवो भवन्ति उभयपदीनाञ्चैवमन्ये मन्यन्ते ॥ भुजादि सानुकारपाठस्यापादानात् भुजो कौटिल्ये इत्येतस्मान्न भवति निर्भुजति पाणिम् । प्रति भुजति शाखाभिः ॥

**११६४ ला** ।१।२।९४। लादेशेन सह य संयोगस्तदन्तस्य पदस्य लुग्भवति ॥

**११६५ सिपि दश्च वा** ।१।२।७३। पदान्ते सस्य दस्य च सिपि रिर्वा भवति ॥ रस्य विसर्जनीयः शेषं प्राग्वत्। अरुणत् (द्) अरुन्धाम् अरुन्धन्। अरुण अरुणद्वा अरुन्धम् अरुन्ध। अरुणधम् अरुन्ध्व अरुन्ध्म ॥ अभुङ्क्त अभुञ्जाताम् अभुञ्जत। अभुङ्क्था अभुञ्जाथाम् अभुङ्ग्ध्वम्। अभुञ्जि अभुञ्ज्वहि अभुञ्ज्महि ॥ अयुनक् (ग्) अयुङ्क्ताम् अयुञ्जन्। अयुनक् (ग्) अयुङ्क्तम् अयुङ्क्त। अयुनजम् अयुञ्ज्व अयुञ्ज्म ॥ अयुङ्क्त अयुञ्जाताम् अयुञ्जत। अयुङ्क्था अयुञ्जाथाम् अयुङ्ग्ध्वम्। अयुञ्जि अयुञ्ज्वहि अयुञ्ज्महि ॥ लोटि ॥ रुणद्धु रुन्द्धाद्वा रुन्द्धां रुन्द्धतु। रुन्धि रुन्द्धाद्वा रुन्द्धं रुन्द्ध। रुणधानि रुणधाव रुणधाम ॥ भुङ्क्तां भुञ्जातां भुञ्जतां। भुङ्क्ष्व भुञ्जाथां भुङ्ग्ध्वं। भुनजै भुनजावहै भुनजामहै ॥ युनक्तु युङ्क्ताद्वा युङ्क्तां युञ्जन्तु। युङ्ग्धि युङ्क्ताद्वा युङ्क्तं युङ्क्त। युनजानि युनजाव युनजाम ॥ युङ्क्तां युञ्जातां युञ्जतां। युङ्क्ष्व युञ्जाथां युङ्ग्ध्वं। युनजै युनजावहै युनजामहै ॥ लेङि। रुन्ध्यात् रुन्ध्यातां रुन्ध्युरित्यादि ॥ भुञ्जीत भुञ्जीयातां भुञ्जीरन् इत्यादि ॥ युञ्ज्यात् युञ्ज्यातां युञ्ज्युरित्यादि ॥ युञ्जीत युञ्जीयातां युञ्जीरन् इत्यादि ॥ चुर लुण्ट स्तेये ॥ अदित् ॥

**११६६ चुरादिभ्यो णिच्** ।४।१।७। चुरादिभ्यो धातुभ्यः स्वार्थे णिच् भवति ॥ णचावितौ ह्रस्वस्य हल इत्येङ्। चोरीत्यतो लडादयः। शेषं प्राग्वत्। चोरयति चोरयतः चोरयन्ति। चोरयसि चोरयथः चोरयथ। चोरयामि चोरयावः चोरयामः ॥ छदि संवरणे। इदित्। णिचि ॥

**११६७ ञिणत्यस्या** ।४।१।२३०। धातोरुपान्त्यस्यात आङ्भवति ञिति णिति च प्रत्यये परे ॥ अवयवे कृतं लिङ्गं समुदायस्य विशेषणं भवति अवयवेऽकृतार्थत्वादिति न्यायेन णिजन्तादेव तङ्। छादयते छादः

येते च्छादयन्ते इत्यादि ॥ लक्षी दर्शनाङ्कनयो ॥ ईदित् । णिनादि अनुपा न्त्यत्वात् नात । लक्षयति लक्षयत लक्षयन्ति इत्यादि ॥ लक्षयते लक्षयेते लक्षयन्ते इत्यादि ॥ लङि । अचोरयत अचोरयताम अचोरयन् इत्यादि ॥ अच्छादयत अच्छादयेताम् अच्छादयन्त इत्यादि ॥ अलक्षयत् अलक्षयताम् अलक्षयन् इत्यादि ॥ अलक्षयत अलक्षयेताम् अलक्षयन्त इत्यादि ॥ लेटि । चोरयतु चोरयताद्वा चोरयता चोरयन्तु इत्यादि ॥ च्छादयता च्छादयेतां च्छादयन्ताम् इत्यादि ॥ लक्षयतु लक्षयताद्वा लक्षयता लक्षयन्तु इत्यादि ॥ लक्षयता लक्षयेता लक्षयन्ताम् इत्यादि ॥ लेङि । चोरयेत् चोरयेता चोरयेयु इत्यादि ॥ च्छादयेत च्छादयेयाता च्छादयेरन् इत्यादि ॥ लक्षयेत् लक्षयेता लक्षयेयुरित्यादि ॥ लक्षयेत लक्षयेयाता लक्षयेरन् इत्यादि ॥ युज पृच सयमने ॥ अदित् ॥

**११६८ युजादेर्वा** ।४।१।८। युजादिभ्यो धातुभ्य स्वार्थे णिज्वा भवति ॥ पक्षे शवेव शेष प्राग्वत् । योजयति योजयत योजयन्ति इत्यादि ॥ योजति योजत योजन्तीत्यादि ॥ अर्चि पूजायाम् । इदित् । णिजभावपक्षे सावकाश इति णिन्तात्तङ् न भवति । अर्चयति अर्चयत अर्चयन्तीत्यादि ॥ अर्चते अर्चेते अर्चन्ते इत्यादि ॥ वृञ् वरणे ॥ ञ इत् णिच्यरात्त्वे । वारयति वारयत वारयन्तीत्यादि ॥ वरति वरते इत्यादि ॥ लङि ॥ अयोजयत् अयोजयताम् अयोजयन् इत्यादि ॥ अयोजत् अयोजताम् अयोजन् इत्यादि ॥ आर्चयत आर्चयताम् आर्चयन इत्यादि ॥ आर्चत आर्चेताम् आर्चन्त इत्यादि ॥ अवारयत् अवारयताम् अवारयन् इत्यादि । अवरत् अवरत इत्यादि ॥ लेटि ॥ योजयतु योजयताद्वा योजयता योजयन्तु इत्यादि ॥

१ सावकाशानवकाशयोरनवकाशविधिर्बलवान् । अत्र सावकाशविधिस्तङ् अर्थोदय नावयवे इकारस्य कृतार्थत्वात् । निरवकाशविधिस्तङ् तस्य अवयवेऽनवकाशात् समुदायाद्भवति ॥ पर स्यात्पूर्वपरयोर्नित्य स्यात्परनित्ययो ॥ नित्यात्तथाऽन्तरग स्यात् सोऽप्यनवकाशकम् ॥ १ ॥

योजत ॥ अर्चयतु अर्चयताद्वा अर्चयताम् अर्चयन्तु इत्यादि ॥ अर्चताम् अर्चेताम् अर्चन्ताम् इत्यादि ॥ वारयतु वारयताद्वा वारयतां वारयन्तु । वरतु । वरताम् । इत्यादि ॥ लेङि ॥ योजयेत् योजयेतां योजयेयुः इत्यादि ॥ योजेत । अर्चयेत् अर्चयेताम् अर्चयेयुरित्यादि ॥ अर्चेत अर्चेयाताम् अर्चेरन् इत्यादि ॥ वारयेत् वारयेतां वारयेयुरित्यादि ॥ वरेत वरेतां वरेयुरित्यादि ॥ वरेत वरेयातां वरेरन् इत्यादि ॥ एवं तत्तद्गणधातवः सर्वेऽपि नेतव्याः ॥ इति कर्तरि शैलप्रकरणम् ॥

॥ कर्मभावविवक्षायाम् ॥

**११६९. साप्यानाप्यात्कृत्यक्तखलर्थाः कर्मभावे** ।४।३।५५। सकर्मकाद्धातोः कर्मणि विवक्षिते लडादयो भवन्त्यकर्मकाद्भावे ॥ इति लडादयः ॥

**११७०. कर्मभावे** ।४।३।१७। कर्मणि भावे च विवक्षिते धातोर्लस्तङेव भवति ॥

---

१ वेति निवृत्त कार इत्यभङ्गात् ॥ सकर्मकादकर्मकाच्च धातोर्लकृत्यक्तखलर्थाः प्रत्ययाः यथासंख्यं कर्मणि भावे च भवन्ति ॥ एवं लकाराणां नयाऽथा अन्येषां द्वौ द्वौ । क्रियया आप्तुं विषयीकर्तुं योग्य आप्यम् । आप्येन सह वर्तमानं साप्यं । न विद्यते आप्यो यस्यासौ अनाप्यः । साप्यं च अनाप्यं च साप्यानाप्यम् तस्मात् ॥ घ्यण् इत्यत आरभ्य वद सुप क्यप् च इति पकारेण प्रत्याहार । घ्यण् तव्य आनीय य क्यप् इति पञ्च प्रत्ययाः ॥ साप्यानाप्यादिति किं सकर्मकाद्भावे माभूत् घट क्रियते देवदत्तेनेति । अविवक्षित कर्मणि अकर्मका एवेति भवन्ति भुज्यते देवदत्तेन ॥ धातोरर्थान्तरे वृत्तधात्वर्थेनोपसंग्रहात् ॥ प्रसिद्धरविवक्षात कर्मणोऽकर्मिका क्रिया ॥ १ ॥ अत्रोदाहरणानि वहति नदी । जीवति देवदत्त । मेघो वर्षति । उच्यते देवदत्तेन ॥ द्विकर्मकाणां धातूनां गुणमुख्यकर्मणोस्तुल्यकर्मत्वाभावात् गुणकर्मयोगे मुख्यक्रियास्वरूपकाणि भवन्ति । अजा नीयते ग्रामम् । गौर्दुह्यते पयः । माणवको बोध्यते धर्मम् । माणवक बोध्यते शास्त्रम् ॥

२ कर्मभावयोरनेन विधानात् कर्तरि गण सर्वो विधि ॥

११७१ क्लेशे यक् ।४।२।१०। कर्मभावयोर्धातोः क्लेशे यक् भवति ॥ क इत्। क्लिद्यातिङ्गदेशः। भावो धात्वर्थः क्रिया तस्यैकत्वादेकवचनं तत्र। अत्र लकारेण कर्तुरनभिधानात् अभाधा येन कर्तरि तृतीया विभक्तिर्भवति। शेष प्राग्वत्। भूयते देवदत्तेन विदुषा। ताभ्यां भूयते। तैर्भूयते। त्वया भूयते। मया भूयते ॥

सन्मात्रं भावलिङ्गं स्यादसंपृक्तं तु कारकैः ॥
धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते ॥ १ ॥
क्रियापदं कर्तृपदेन युक्तं व्यपेक्षते यत्र किमित्यपेक्षाम् ॥
सकर्मकं तं सुधियो वदन्ति शेषस्ततो धातुरकर्मकः स्यात् ॥ २ ॥
लज्जासत्तास्थितिजागरणं वृद्धिक्षयभयजीवितमरणम् ॥
स्वपक्रीडारुचिदीप्त्यर्था धातव एते कर्मविहीनाः ॥ ३ ॥

अकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्तीत्यनुपूर्वस्तेः तस्य। तस्यागतार्थस्युपसर्गसनाथा भवते सोपसर्गत्वात्सकर्मकात् कर्मणि लस्तादयो नवापि भवन्ति। शेष प्राग्वत्। अनुभूयते अनुभूयेते अनुभूयन्ते इत्यादि ॥ एध्यते॥ पच्यते पच्येते पच्यन्ते ॥ लङि। अभूयत ॥ अन्वभूयत अन्वभूयेताम् अन्वभूयन्त इत्यादि ॥ ऐध्यत ॥ अपच्यत अपच्येताम् अपच्यन्त इत्यादि ॥ लोटि ॥ भूयताम् ॥ अनुभूयताम् अनुभूयेताम् अनुभूयन्ताम् इत्यादि ॥ एध्यताम् ॥ पच्यताम् पच्येताम् पच्यन्ताम् इत्यादि ॥ लिङि। भूयेत। अनुभूयेत ॥ एध्येत ॥ पच्येत पच्येयाताम् पच्येरन् इत्यादि ॥ अद्यते। आद्यत। अद्यताम्। अद्येत ॥

११७२ य्यय् ।४।२।४। शीङ इको ये क्ङित्यय् भवति ॥ शय्यते। अशय्यत। शय्यताम्। शय्येत ॥

१ धातोः कर्मणि भावे च वर्तमानस्य। शृ शिदादौ लले लोट् लङि लिङि यक् प्रत्यये परे मध्य यक्प्रत्ययो भवति। शिदित्यनुवर्तनम्। शेऽङ इति किं चकास्यात् ॥

२ सत्तामात्रं भाव इति निश्चयम् ॥

११७३ अस्तिब्रुवोर्भूवचौ ।४।२।९१। अस्तेर्यकि प्रत्यये भू भवति ब्रुवो वच् ॥

११७४ श्व्यादिस्वञ्यच किति ।४।१।११५। श्व्यादीना स्वञ्चोश्च साचो यञ इग्भवति किति परे ॥ उच्यते । औच्यत उच्यताम् उच्येत ॥ यङलेड्कृति चर्दचोरीदीर्घाविति दीर्घ । हूयते । अहूयत । हूयता । हूयेत ॥ हायते । अहायत । हायता । हायेत ॥

११७५ ई हल्यघ्ये ।४।२।८७। घुसनामा माम्थागापाहाङ्साना च धातूना हलादौ क्ङिति ल्यक्ति प्रत्यये परे ईद्भवति न घ्ये ॥ दीयते । अदीयत । दीयता । दीयेत ॥ दीव्यते । अदीव्यत । दीव्यता । दीव्येत ॥ भूयते । अभूयत । भूयता । भूयेत ॥ नह्यते अनह्यत । नह्यता । नह्येत ॥ अश्यते । आश्यत । अश्यताम् । अश्येत ॥ यङलेडिति दीर्घ । चीयते । अचीयत । चीयता । चीयेत ॥ क्रीयते । अक्रीयत । क्रीयता । क्रीयेत ॥ रि । म्रियते । अम्रियत । म्रियता । म्रियेत ॥ गृह्यते । अगृह्यत । गृह्यता । गृह्येत ॥ तुद्यते । अतुद्यत । तुद्यता तुद्येत ॥ रि । म्रियते । अम्रियत । म्रियता । म्रियेत ॥ मुच्यते । अमुच्यत । मुच्यता । मुच्येत ॥

११७६ तनो यकि ।४।१।२७०। तनो धातोराद्वा भवति यकि परे ॥

---

१ घुमास्थागापाहाङ्सा इत्येतेषां धातूना घ्यवर्जितहलादौ क्ङ्प्रत्यये ईकारादेशो भवति । मा माने माङ् माने । ष्ठा गतिनिवृत्तौ । गै शब्दे । पा पाने । ओहाक् त्यागे । षोऽन्तकर्मणि । हलीति किं? तस्थतु तस्थु । अघ्येति किं? प्रधाय प्रदाय । प्रमाय । प्रस्थाय । प्रगाय । प्रपाय । प्रहाय । अवसाय । क्ङतीति किं? अदात । अधत अस्थात । अपात । क्ङितीति किं? दाता धाता ॥ अघ्येति कथ प्रतिषेध इति न शङ्कनीयम् । घ्य प्रत्ययः । क्त्वश्च घ्यादेशः स्थानिवद्भावेन क्ङिति भवति अतो एव निषेध ॥

२ अन्यनुनासिकस्य ।६।१।२६९। ये वा ।६।१।२६४। इति सूत्रद्वयमपिहाय (एतत्सूत्रद्वयमत्र पठ्यते) यश्रनि किं? तन्त्यते ॥ भ्वादिचरू 'देनातेयनि' इति सूत्रम् । तथा धातुनिर्देशार्थ एव तिप् । यङ्लुङ्निवृत्त्यर्थं च ॥

दीर्घ । तायते तन्यते । अतायत अतन्यत । तायता तन्यता । तायेत तन्येत ॥ मन्यते । अमन्यत । मन्यता । मन्येत ॥ रि क्रियत । अक्रियत । क्रियता क्रियत ॥ रुध्यते । अरुध्यत । रुध्यता । रुध्येत ॥ भुज्यते । अभुज्यत । भुज्यता । भुज्येत ॥ युज्यते । अयुज्यत । युज्यता । युज्येत ॥

**११७७ णेरिंक्वानिड्डामाल्वन्तेत्न्वाय्ये** ।४।२।१०१। णेरि डायो क्ययोर्ल्यश्चि प्रत्यये च परे लुग्भवति नेडामाल्वन्तेत्न्वाय्येषु ॥ चोर्यते । अचार्यत । चोर्यता । चोर्येत ॥ छाद्यते । अछाद्यत । छाद्यता । छाद्येत ॥ लक्ष्यते । अलक्ष्यत । लक्ष्यता । लक्ष्येत ॥ योज्यते । अयोज्यत । योज्यता । योज्येत ॥ युज्यते । अयुज्यत । युज्यता । युज्येत ॥ अर्च्यते । आर्च्यत । अर्च्यताम् । अर्च्येत । पार्यते व्रियते । अपार्यत । अव्रियत । पार्यता व्रियता । पार्येत व्रियेत ॥ एवमन्येऽपि धातवो नेयाः ॥

अविवक्षितकर्तृकाणां सकर्मकधातूनां कर्मण एव कर्तृत्वे ॥

---

१ धातोरवयवस्य णेरिडायो चया इडागमादव तदवाय्यवाजते च ल्यश्चिप्रत्यय लुग्भवति । इक्रमद्ग्रणमिडर्थं । चकारादिडि कृते गोप न प्राप्त । शाकित । शाकितवान् । अन्यथा हि इड् न स्यात् । ककारादिह न भवति कारयितव्य हारयितव्यम् ॥ अत एव णप्रत्ययस्य णवद्वयवस्य चाथवतोऽनथकस्य च द्वयोर्ग्रहणम् ॥ इ इडा गमन युक्त च चवद्प्रत्यय इण । इड् च आम च आलुश अन्तच इत्लुश्च आल्यच पुनमधीक न इडामाल्वन्तत्न्वाय्य । इक । अनिड्माल्वन्तत्वाय्य च तस्मिन् । नडामाल्वन्तेत्न्वाय्ये इति किं इड कारयिताड कारयिता हारयन्ता । आम् कारयांचकार । आलु स्पृहयालु गृहयालु । अन्तप्रत्यय आगादि गण्डयन्त मण्डयन्त ॥ हृदिदयिस्तनिपुगदिमदिभ्या णेरित्नुरित्याणादिक । स्तनयित्नु गदयित्नु ॥ आय्य स्पृहयाय्य । महयुश्विस्पृहिभ्य आय्य इत्याणादिक आय्य ॥ णिलोप नि मित्ताभावे नैमित्तिकस्याप्यभाव इति प्राप्त अजादश पर निमित्त पूर्वीवि प्राप्त नैवञ्चमीति न्यायन न भवति ॥ णिमा इन्द्व वद्दुप्रत्ययनिमित्तव ॥

**११७८ कर्मण्यसुवादीनां कर्म्मवाल्लि** ।४।३।३५। कर्मणि कर्तरि धातोर्ल कर्मवत्कार्यं भवति न स्रवत्यादीनामिति यगादि भवति ॥ अनुभूयते कम्बल स्वयमेव । पच्यते ओदन स्वयमेव । भिद्यते कुसूल स्वयमेव । असुवादीनामिति किं? स्रवति जल स्वयमेव इत्यादि नेयम् ॥

॥ इति भावकर्मल्लेलपरिच्छेद ॥

## ॥ अथ शेषलकारा कर्तरि नीयन्ते ॥

भू इत्यत लिङ्लेडाशिषीति लिङ् । इडावितौ । तिबादय प्राग्वत् । एर्ङ्डितो लुगिति लुक् । क्यासद् अटका इत । तिप्सिपोस्सयोगस्येति सुलुक । झेर्जुस् । शेप प्राग्वत् ॥ भूयात् भूयास्ता भूयासु । भूया भूयास्त भूयास्त । भूयास भूयास्व भूयास्म ॥ एव न धात् नन्धास्ता नन्धासु इत्यादि । एधस्तङि टिय् ॥

**११७९ सद् स्थीया लिङः** ।१।४।११२। लिङस्तथयोष्टीयश्च सद् भवति ॥ अटावितौ । टिदादि । वलि यलुक् ॥

**११८० वलादेरिडलवपुणादेः** ।४।२।१३४। धातोर्वलादेर्ल्यंस्क इड् भवति न लवपुणादे ॥ ट इत् । पि ष्टुत्व । झस्य रन् । इलोऽत् । शेप प्राग्वत् । एधिपीष्ट एधिषीयास्ताम् एधिषीरन् । एधिषीष्ठा एधिषीयास्थाम् एधिषीध्वम् । एधिषीय एधिषीवहि एधिषीमहि ॥ पच्यात् पच्यास्ता पच्यासु इत्यादि ॥ तङि ॥

---

१ तथ थ-च टीय् च स्थीय तेपो स्थीया । लिडादेशस्य तकारथकारयोष्टीयश्च सडागमो भवति । लिङिति किं? पचेत । स्थीयामिति किं? कृषीरन् कृपीध्वम् । स्थीय साहचर्यात् परस्मैपदयोस्तयो सड् न भवति ॥

२ वलादेरिति किं? लव्य लवनीय । आदिग्रहण किं? लावक पावक । अन्ते व पुणादेरिति किं? भ्र हल्स्य हिभ्र सूकरस्य पोत्र पत्र । णश् नश्वर । उणादि तु तन्तु जन्तु । श कोष्ट क्रुष्ठ । शृ शास्ता शस्ता । स्नद् शृस्त्र तीक्ष्ण । स्वश्रीति किं? आस्ते शेत ॥

**११८१ मुरिसिचिपचाच.** ।४।२।१७७। म्वादिपूर्वाद्यान्तात्पाचो धातोर्वलादेरिड् न भवति ॥ शेषं सुगमं । पक्षीष्ट पक्षीयास्तां पक्षीरन् इत्यादि ॥ अयात् अयास्ताम् अयासु इत्यादि ॥

**११८२ शक्प्रच्छिविन्द्विग्हन्वसिघस्यचोऽश्विश्रिशीङ्डीङ्रूपदकोद्वृदृत.** ।४।२।१७६। शकादिभ्य अजन्तेभ्यश्च एकाज्भ्यो वलादेरिड् न भवति श्विश्रिशीङ्डीट रूपद्कमृदन्त वृङ्वृनौ ऋदन्तामदन्त च वर्जयित्वा ॥ इतीड्प्रतिषेधो न भवति । इणो लिलुङा धो ढ । इत्यधिकृत्य ॥

**११८३ वेड्के** ।१।२।८२। इनन्तादिटो निटश्च परेषां लिङ्लिङ्लुङा धस्य ढो वा भवति ॥ शेषं प्राग्वत् । शयिषीष्ट शयिषीयास्ता शयिषीरन् । शयिषीष्ठा शयिषीयास्था शयिषीढ्व शयिषीध्व । शयिषीय शयिषीवहि शयिषीमहि ॥ उच्यात् उच्यास्ताम् उच्यासु इत्यादि ॥ सङ्यकित्त्वान्वेक् । मुरिसीतीडभाव । वक्षीष्ट वक्षीयास्तां वक्षीरन् इत्या-

---

१ मुच्लृन् मोक्षणे । रिचन् निरेचने । पिचॄन् क्षरणे । विचृन् पृथग्भावे । डुपचिष पाके । वच् परिभाषणे । ब्रुवा वचे । नश्चकारान्तान् ॥

एकाच इति वर्तते । शकॢ शक्तौ । शक मर्षणे । प्रच्छ ज्ञीप्सायाम् । विदॢन् लाभे । विदि विचारणे । विद विदि सत्तायाम् । हन हिंसागत्यो । वस निवासे । घसुङ् करणे घसादेशश्च । इत्येतेभ्याऽजन्तेभ्यश्चैकाज्भ्यो धातुभ्य विहितस्य प्रत्ययस्येटागमो न भवति । टुवोश्वि गतिवृद्ध्यो । श्रीञ् सेवायाम् । शीङ् स्वप्ने । डीङ् विहायसा गतौ इत्येतान् रुपञ्क ( रु, टुक्षु शब्दे । क्ष्णु तेजने । स्नु प्रस्रवणे । णु स्तुतौ । यु मिश्रणे । इति रुपञ्च ) उकारान्त वृङ् सभक्तौ वृञ् वरणे इत्येतौ ऋकारान्तमकारान्त च वर्जयित्वा ॥ शक् प्रच्छि विन्द्वि इत्यत्र विद्लृन् लाभे इति तुदादौ लिपादिसम्बन्धिन विदि विचारण इति रुधादिसम्बन्धिनश्च ग्रहणाधिक्याददत्यत्र इट् न भवति । विकरणोपादान ज्ञाना-यभ्युदासार्थं वेदितॄ शास्त्रस्य । वसतेर्ग्रहणं न वस्ते अदित्वान् वसिता वस्त्राणाम् । विन्द-तेरप्युदास केचिदाहु वेदिता धनस्य विद्लृन् लाभे इति धातुस्तुदाद्यन्तर्गत । लिपादौ विदि विचारणे इति रुधादिरस्य ग्रहणम् ॥ हनो वधस्तदि लुङि ' इति हन हिंसागत्यो-रिति धातोर्वधादेशे सति अदन्तता भवति । पश्चादनेकाचोऽपि धातो प्रतिषेधो भवत्येव ॥

दि ॥ यशलेङिति दीर्घः । हूयात् हूयास्ताम् हूयासुः इत्यादि ॥ शकम-च्छीति नेट् हासीष्ट हासीयास्ताम् हासीरन् इत्यादि ॥

११८४ घुमास्थागापाजहातिसां हलि ।४।२।८६। घ्वादीनां क्ङिति लिङ्येत् भवति ॥ धेयात् धेयास्ताम् धेयासुः इत्यादि ॥ तङ्यकित्त्वान्नैत् धासीष्ट । दीव्यात् ॥

११८५ रधादिभ्यश्च ।४।२।१३९। रधादेरौदितो धूञश्च वला-देरिड्वा भवति ॥ सविषीष्ट । इडभावे ॥

११८६ इणो लिलुङा धो ढः ।१।२।८१। इणन्ताद्धातोर्लिङ्लि ट्लुङां धस्य ढो भवति ॥ सोषीष्ट सोषीढ्वम् इत्यादि ॥ नह्यात् नह्यास्ताम् नह्यासुरित्यादि ॥

११८७ वनमिद्धुरुदिलिदादः हः ।४।२।१८७। वादिपूर्वात् हा-न्तादेकाचो धातोर्वलादेरिड् न भवति ॥ हम्य ध । नत्सीष्ट नत्सीयास्ताम् नत्सीरन् ॥ सूयात् सूयास्ताम् सूयासुरित्यादि । औदित्त्वादिड् अशिषीष्ट । इडभावे व्रश्चेति शस्य षः ॥

---

१ घ्वादीनां क्ङिति लिङि प्रत्यये नित्यमेकारादेशो भवति ॥ अत्र ओहाङ् गतौ इत्यस्य हकारोपादानान्न भवति ओहाक् त्यागे इत्यस्यैव । पा इत्येवादिकस्य ग्रहणं न पा रक्षणे इत्येतस्य ॥

२ रध हिंसासंराद्ध्योः । णश अदर्शने । तृप प्रीणने । दृप हर्षविमोहनयोः । द्रुह जिघांसायाम् । मुह वैचित्ये । ष्णुह उद्गिरणे । ष्णिह प्रीतौ । इति रधादि ॥

३ लिङ् च लिट् च द्वौ लौ लुङ् इति बहुत्वाद्बहुवचनम् । तथा बहुवचनमुत्तरार्थम् लिङ्ग्रहणमपि सिध्यति । निक्षीध्व दुक्षीध्व नर्त्सीध्वमित्यादौ लिङ् आच्छादने दुहि प्रपूरणे णहि बन्धने इत्यादिषु लिङ् सीध्व नह् सीध्व इति स्थाने हकारस्य घत्वात् अय ढविधि कस्मान्न स्यादिति चेत् तत्राय ढविधि प्राप्नोति 'ह ।२७१।' इत्यादिना ढत्वघत्वढत्वानि च । तत्र परे असिद्धत्वाधिकारादयं ढविधिरसम्भवतीति ढत्वानिदितेषु ङ्लोपु हकारस्याभावादयं निषेधिनत्स्यात् ॥

४ रदि ... । णदि ... । मिह सेचने । दुहि प्रपूरणे । रुह बीजजन्मनि । ... उपचये । ... ॥

११८८ **पेढ[1] कस्सि** ।१।२।६६। पञ्चोम्सि को भवति ॥ अक्षीष्ट अक्षीयास्ताम् अक्षीरन् इत्यादि । चीयात् । तङि शस्मन्चीनि नेट् चेषी ष्ट ॥ क्षीयात् ॥

११८९ **हल्भ्या चोस्मदृतद्से.**[3] ।४।२।१३८। हल्द्वयात्परऋदन्तात् नादन्तात् वृङ्वृञ्भ्या च परस्य सटस्नइपरस्य च सेरिड्वा भवति॥ वरिषीष्ट । इडभावे—

११९० **उं**[2] ।४।१।१६३। ऋवर्णान्तस्य धातोस्तङि सकारादौ सिसौ क्ङिद् भवति ॥ वृषीष्ट । वृषात् ॥

११९१ **ग्रह् एकाचोऽलिटीट**[4] ।४।२।१३६। एकाचो ग्रहेरिट ईड भवति न लिटि ॥ ग्रहीषीष्ट । गृह्यात् ॥

११९२ **अक्षुनुतुस्कन्भिच्छिक्षिशपसद्दाद्घः**[5] ।४।२।१८०। अदादिपूर्वाद्धान्तादेकाचो धातोर्वलादेरिड् न भवति ॥

११९३ **सिलौ तङि** ।४।१।१६२। हलन्तस्य धातोरिक्न्तद्परे सादौ सौ लिङि च परे क्ङिद् भवति ॥ भित्त्वा रेद् । चुत्सीष्ट । मृषीष्ट । मुच्यात् । भित्त्वा रेद् मुक्षीष्ट । तन्यात् । मनिषीष्ट । भियात् । कृषीष्ट । रुध्यात् ॥

---

१ ढ इति किम् अग्नि भवन्ति । सति किम् द्वोष्ट निष्टि ॥

२ उरिति ककारार्थम् तद्परं सि तद्सि । सद् च तद्सिश्च तत्त्व ॥

३ हल्द्वयात्परऋदन्तात् हल्द्वयरहितऋदन्ताच तद्परे सकारादौ सिप्रत्यये लिङि तेङि च परे क्ङित्कार्ये भवति । अकृत अपहृत । कृषीष्ट हृषीष्ट आस्तीर्ष्ट न्यवृष्ट ।

४ ग्रह इति किम् भविता । एकाच इति किम् जरिता । जरिगृहीतु जरिगृहीतव्यम् । उत्तरार्थमेकाज्ग्रहणम् । अलिटीति किम् जगृहीम । नित्यत्वेऽपि द्विवचनस्यैकाच इति विहितविशेषणमित्यग्रहणम् ॥ इत इति किम् ग्रहण ग्राहक । अमादिषातामिति नि नद् ॥

५ अद् भक्षणे । क्षुदृञ् संपेषे । णुद क्षेपे । तुदि व्यथने । स्कन्द गतिशोषणयो । भिन्द विदारणे । छिन्द् द्वैधीकरण । खिदि दैन्ये । शद्लृ शातने । पदि गतौ । षद्लृ विशरणगत्यवसादनेषु । हदी पुरीषोत्सर्गे ॥

११९४ **[1]वध्रासायुधुक्रुशुरुक्षुव्याद्धः** ।४।२।१८१। वनादिपू-र्वाद्धान्तात् एकाचो धातोर्वलादेरिड् न भवति ॥ शेषं प्राग्वत् । रत्सीष्ट ॥

११९५ **[2]भ्रस्मस्त्युयविनिज्यभुजभाज्जः** ।४।२।१७८। भ्र-सादिपूर्वाज्जान्तादेकाचो धातोर्वलादेरिड् न भवति ॥ भुक्षीष्ट । युज्यात् । युक्षीष्ट ॥ णिलुक् चोर्यात् । छदोऽनेकाच्त्वात् इड्निषेधो नास्ति । छाद यिषीष्ट । लक्ष्यात् लक्षयिषीष्ट । योज्यात । युज्यात् । अर्च्यात् अर्चिषीष्ट । चार्यात् । म्रियात् । वरिषीष्ट । वृषीष्ट ॥ एवमन्येऽपि धातवो लिङन्ता नेया ॥

" अत्यन्तापह्नवे लिट् ।४।३।२११। इत्यधिकृत्य ॥ "

११९६ **[3]परोक्षे** ।४।३।२१२। परोक्षे स्वयमसाक्षात्कृते भूतानद्यत-नेऽर्थे धातोर्लिड भवति ॥ इटावितौ । तिनादय ॥

११९७ **[4]अतडाणशातुसुस्थाथुसम्णाश्वमाः** ।१।४।१०१। लिटस्तिनादीना नवाना यथासङ्ख्य णशादयो नव भवन्ति ॥ णशावितौ शित्त्वात्सर्वस्य ॥

---

१ वध बन्धने । राध संसिद्धौ । युधि सम्प्रहारे । बुधि मनि ज्ञाने । बुधि बोधने इ त्यस्य च । क्रुधि कोपे । शुध शौचे । रुधिर आवरणे । क्षुध बुभुक्षायाम् । व्यध ताडने ॥

२ युजृञ् योगे । यजि देवपूजासङ्गतकरणदानेषु । विजृञ् पृथग्भावे धातुरस्ति । ओ विजइ भयचलनयोरिति तौदादिकस्तस्य न निषेधोऽस्य ओविजै भये इति रौधादिकस्य च किन्तु धात्वन्तरस्य । तयोरौदित्करणात् ॥ णिजृञ् शौचशोधनयो । त्यज हानौ । भुज पालनाभ्यवहारयो । रुजो भङ्गे । भजी सेवायाम् ॥

३ चक्षुरदर्शनविषय परोक्ष । अक्षाणामिन्द्रियाणां पर परोक्ष सम्प्रतीन्द्रियाणाम विषय अगोचर इत्यर्थ ॥ परोक्ष यत्र प्रयोक्ता साक्षादधिगत मतम् ॥ अभूवँस्तापसा केचित्पाण्डुपत्रफलाशिन ॥ परिव्राज्य तदा दत्त मरीचिश्च तृणादित ॥ १ ॥ भूतानद्य तनपरोक्षेऽपि भूतमात्रस्य भूतानद्यतनमात्रस्य च विवक्षाया लुङ्लङौ च भवत ॥

४ तिप् तस् झि । सिप् थस् थ । मिप् वस् मस् इत्यतेषा लिट आदेशानां अतडा नवानां णल् अतुस् उस् । थल् अथुस् अ । णल् व म इत्येते नवादेशा भवन्ति ॥ णकारो णित्कार्यार्थ ॥

**११९८ क्विद्धिदीन्धेश्चामयोमात्** ।४।१।१४८। असंयोगा न्धेश्च धातोरपिति लिटि परे क्रिवीव कार्यं भवति ॥

**११९९ कित्युरुश्यूर्णुञः** ।४।२।१८९। एकाच उगन्तात् श्रि ञ ऊर्णुञश्च क्तिाडिट् न भवति ॥

**१२०० सृभृवृस्तुद्रुश्रुस्रोश्च लिटि** ।४।२।१९३। सादिभ्य असकारात् कृञश्चैव विहितस्य लिट इट् न भवति नान्यस्मादिति नियमा त् लिटीड् भवत्येव ॥ निध्यन्तरात् प्रागेव द्विर्भाव । आगुजशिति पूर्वस्य वत्वोत्वे ॥

**१२०१ भूव्यथोऽदित्** ।४।१।१०७। भुवो लिटि द्विर्भावे पूर्व- स्योत अद्भवति व्यथोऽत इत् ॥ पित्येङवौ । णित्यात् अपित्युव् ॥

**१२०२ लुङ्लिटि भुवः** ।४।१।२१८। भुव उपान्त्यस्याच लुङि लिटि च ऊद्भवति ॥ बभूव बभूवतु बभूवु । बभूविथ बभूवथु बभूव। बभूव बभूविव बभूविम ॥ एव ननन्द ननन्दतु ननन्दु इत्यादि ॥

**१२०३ दयायास्कास्गुर्विजाग्रनेकाचोऽनृच्छूर्णोरां कृ- भ्वस्लिद् चानु** ।१।४।८३। दयादेर्गुर्विजादेरनेकाचश्च परस्य लिट आ भवति न ऋच्छूर्णोतिभ्या तस्य चादन्तर लिडन्ता कृभ्वस्तय प्रयुज्यन्त एव ॥

**१२०४ आम' कृञ'** ।१।४।४७। आम प्राक्प्रकृतेरिवाम परात् कृञो लस्तङ् भवति ॥

**१२०५ लिटस्तझस्यैशिरे** ।१।४।९८। लिटस्तस्य एश् भवति झस्य इरे ॥ किरवात् नार। धस्य ढ । सादित्वान्नेट्। द्विर्भावे पूर्वस्य

---

१ सृ गतौ ससर्थ ससृम । डुभृञ् धारणपोषणयो बभृव बभृम ॥ व इति सामा न्येन ग्रह वृनाग्रहणम ववृवह ववृमहे । ववृर ववृभ ॥ ष्टुञ् स्तुतौ तुष्टुव । तुष्टुम ॥ द्रु गतौ दुद्रुव दुद्रुम । श्रु श्रवणे शुश्रुव शुश्रुम । स्रु गतौ सुस्रुव सुस्रुम । चकार कृञोऽस इन्तो वर्तमानस्य असकारात्कृञ इत्यस्यैतयो च समुच्चयार्थ । डुकृञ करणे इत्यत चकृव चकृम । संगामसमापराकृञ इट् भवति तस्मादपरान भारतीत्यर्थ

मृतोऽत् चुत्वम् । आमि विदाङ्किदिति पृथगारम्भात् न स्थानिवद्भाव । न च द्वि । आमस्त्म्वदित्यव्ययत्वम् । एधाञ्चक्रे एधाञ्चक्राते एधाञ्चक्रिरे । एधाञ्चकृषे एधाञ्चक्राथे एधाञ्चकृढ्वे । एधाञ्चक्रे एधाञ्चकृवहे एधाञ्चकृमहे ॥ एधाम्बभूव एधाम्बभूवतु एधाम्बभूवु इत्यादि ॥ अस भुवि । अदित्व लिटि अस् अस् इति द्वि ॥

१२०६ हलोऽनादेः ।४।१।८२। द्विर्भावे पूर्वस्यानादेर्हलो लुग्भवति ॥

१२०७ लिट्यादादेरत. ।४।१।१०५। लिटि द्विर्भावे पूर्वस्यादेरत आद् भवति ॥ शेष प्राग्वत् । स्वादिनियमादिट् । एधामास एधामासतु एधामासु । एधामासिथ एधामासथु एधामास । एधामास एधामासिव एधामासिम ॥

१२०८ अर्फ्फलिभजत्वक्षद्कजह्वादिददिशसिकृतस्या-

१ क्विद्वान्दी धश्चासँयोगात्' इति आम्यपि स्थानिवद्भावन क्विद्भावे सिद्धे 'विदाङ्किन्' इति आम पुन र्विवचनादामो न स्थानिवद्भाव । तथाच लिङ्निमित्तो द्विर्भावो न स्यात् ॥

२ क्षद् च कु-च अच हश्च वश्च क्षद्कजह्व । स आदियस्यासौ क्षदक्जह्वादि । क्षदक्जह्वादि-च ददिश्च शसिश्च कृत-च क्षद्क्जह्वादिददिशसिकृत । न विद्यन्ते क्षद्क्जह्वादिददिशसिकृता येषा ते अक्षद्क्जह्वादिददिशसिकृताश्च अर्फ्फलिभजत्वक्षद्क्जह्वादिददिशसिकृत तस्य । अत अकारस्य द्वयोमध्ये वर्तमानस्य ॥ अयोपि ल्वायाम् त्रपे । त्रप इत्यत त तस्य एन् । र अप इति स्थिते । अत्र अकारस्य द्वयोरसहाययोहलो मध्ये स्थितस्यैव एकारादेशो भवति इत्युक्तत्वात् अत्रायमकारस्त्रिहल्मध्ये इत्यप्राप्ते तदर्थं ग्रहणम् ॥ फलाति फलनिष्पत्तौ त्रिफला विशरणे इत्युभयोर्ग्रहणम् फेलतु । फलिभजग्रहण अनन्कजह्वादाति षगादर्निबन्धे प्राप्त तदर्थम ॥ भज सेवायां भेजतु । तॄ प्लवनतरणयो तेरतु तेरु ॥ क्षटकचगअचहवादिददिशसिक्तवर्जितानामुदाहरण । यम उपरमे येमतु येमु । रेणतु रेणु । मनूङ माने मनाते मेनिरे ॥ क्षटकजहवादिददशसिकृतवर्जितानामिति कि? क्षटादि क्षट जक्षटतु जक्षटु । भण शब्दे बभणतु बभणु कादि कणमालने चकणतु । अजादि इयजिथ उवपिथ ॥ हादि हसि हसन जहसतु जहसु ॥ वादि वण शब्दे ववणतु ववणु । ददि दृ दॄ हिंसायां विशश्वरतु विशशरु । लूङ् छेदने लूल्विय । पूङ् पुणविध आदशात्प्रयुक्ते योऽभ्यासरस्तद्भुवान् धातु कृत इत्यु

तोऽनतर्हलो' ।४।१।६३। तप् फलि भज त्र् इत्येतेषा झट्कगगांज्त्वा दिददिशसिकृतवर्जिताना च धातूना द्वयोर्हलोर्मध्ये वर्तमानस्यात एद्भवति इडादावपिति च लिटि परे न च द्वि ॥

१२०९ नित्यानिट्तासोऽत्वदच्मृजृद्दशस्थे वाद्व्यास्ते। ।४।२।१९०। नित्यमनिट् तास् यस्य तस्मादकारवत अज तात् सृजिदृशि भ्या च थे परे इड्वा न भवति न वृ ऋ व्या आवि इत्येतेभ्य ॥

१२१० मिपोऽश् ।१।४।१००। लिटो मिपोऽश् वा भवति ॥ शेप प्राग्वत् । पपाच पेचतु पेचु । पपक्थ पेचिथ पेचथु पेच । पपाच पपच पेचिव पेचिम ॥ पेचे पेचाते पेचिरे । पेचिषे पेचाथे पेचिध्वे । पेचे पेचिवहे पेचिमहे ॥

१२११ लिटि वा ।४।२।१२०। अदो लिटि घस्लृ वा भवति ॥ ल्लादित द्वि टुगादि ।

१२१२ गमहनजनखनघसोऽनङ्यचि लुक् ङिति ।४।१। २२०। गमादीनामुपान्त्यस्याच वङित्यजादौ लुग् भवति नाङि ॥ पत्वचर्त्वे। जघास जक्षतु जक्षु । जघसिथ जक्षथु जक्ष । जघास जघस जक्षिव जक्षिम ॥ पक्षे "लिट्यादादेरत" इत्यात् । आद आदतु आदु । आदिथ आदथु आद । आद आदिव आदिम ॥ प्रत्ययेऽसुधीण इति यत् । वेड् वेरिति धस्य वा ढ । शिश्ये शिश्याते शिश्यिरे । शिश्यिषे शिश्याथे शिश्यिध्वे शिश्यिढ्वे । शिश्ये शिश्यिवहे शिश्यिमहे ॥ ब्रुवो वचि द्वि ॥

१२१३ इग्यज साचोऽर्योज्यम् ।४।१।१०८। आ ज्यो इत्यतो

---

च्यते ॥ द्वयोर्हलोरिति कि? आन्तु । हगारिति द्वद्वनिदशादिह न भवति ततभ्रु । अत इति किं? दिदेवतु ॥

१ गम्लृ गतौ । हन हिंसागत्यो जनइ प्रादुर्भावे । खनुञ् अवधारणे । घस्लृ दश । अचीति कि? गम्यत । इदाचानुत्तरत्रानुवृत्त्यर्थ । ङितीति किं? गमन हनन । अनङीति कि? अगमत् । अघसत् । गोहोऽचीत्यत अचीत्यनुवर्तते अस्मिन्पुनग्र हण उत्तरत्रानुवृत्त्यर्थम् ॥

वक्ष्यमाणस्य धातोर्लिटि द्विर्भावे पूर्वस्य साचो यत्र इग्भवति न रेफयकारपरस्य ॥ अपिति इत्यादीतीक् दीर्घ । उवाच ऊचतु ऊचु । उवचिथ उवक्थ ऊचथु ऊच । उवाच उवच ऊचिव ऊचिम ॥ ऊचे ऊचाते ऊचिरे इत्यादि ॥ पित्यङ्वौ णित्यात् क्त्युव् थे वेद् वस्मसोरिट् । जुहाव जुहुवतु जुहुवु । जुहविथ जुहोथ जुहुवथु जुहुव । जुहाव जुहव जुहुविव जुहुविम ॥

१२१४ भीह्रीभृहुवां श्लुवच्च ।१।४।८५। भ्यादिभ्य परस्य लिट आम् वा भवति स च श्लुवत् ॥ तस्य चानन्तर लिङन्ता कृभ्वस्तय प्रयुज्यन्त एव ॥ अतो द्वित्वादि । विदात् किदिति नियमादाम्येङ्वो ॥

१२१५ न ।१।४।४८। आम परात् कृञो लस्तङ न भवति ॥ शेष प्राग्वत् । जुहवाचकार जुहवाचक्रतु जुहवाचक्रु । जुहवाचकर्थ जुहवाचक्रथु जुहवाचक्र । जुहवाचकार जुहवाचकर जुहवाचकृव जुहवाचकृम ॥

१२१६ इटि चातो लुक् ।४।२।८४। आदन्तस्य धातोरिट्यजादौ च क्ङिति त्यक्षि प्रत्यये लुग् भवति ॥ जहे जहाते जहिरे इत्यादि ॥

१२१७ णमेरौशात ।१।४।०९। आतो लिटो णमिपोरौश् भवति ॥ श इत् ऐत् । दधौ दधतु दधु । दधिथ दधाथ दधथु दध । दधौ दधिव दधिम ॥ दधे दधाते दधिरे इत्यादि ॥ द्वित्वादौ कृते एङ् । दिदेव दिदिवतु दिदिवु । दिदेविथ दिदिवथु दिदिव । दिदेव दिदिविव दिदिविम ॥ सुषुवे सुषुवाते सुषुविरे । सुषुविषे सुषुवाथे सुषुविढ्वे सुषुविध्वे । सुषुवे सुषुविवहे सुषुविमहे ॥ त्रप्फलीत्यत एत् । ननाह नेहतु नेहु । नेहिथ ननद्ध नेहथु नेह । ननाह ननह नेहिव नेहिम ॥ नेहे नेहाते नेहिरे इत्यादि॥ सुषाव सुषुवतु सुषुवु । सुषविथ सुषोथ इत्यादि॥

१२१८ नक् चाशूदायनेकहलः ।४।१।१०६। अशौङ ऋदादेरनेकहलश्च धातोर्लिटि द्विर्भावे पूर्वस्यात आद्भवति नक् चास्य ॥ अकावितौ । आनशे आनशाते आनशिरे । आनशिषे आनशाथे इत्यादि ॥

१२१९ चेर्वा ।४।१।७३। चिनोतेर्लिट्सनोर्द्विर्भावे पूर्वात्परस्य कुर्वा

**तोऽन्तर्हलो** ।४।१।६३। त्रप् फलि भज तॄ इत्येतेषा शद्कुनगाँन्हत्वा दिददिशसिट्नवर्नितानां च धातूना द्वयोर्हलोर्मध्ये वर्तमानस्यात एद्भवति इडादावपिति च लिटि परे न च द्वि ॥

**१२०९ नित्यानिद्तासोऽत्वदृमृजृद्दशस्थे वाह्र्व्यात्ते** ।४।२।१९०। नित्यमनिट् तास् यस्य तस्मादकारवत अजन्तात् सृजिदृशि भ्यां च थे परे इट्वा न भवति न हृ ऋ व्या अति इत्येतेभ्य ॥

**१२१० मिपोऽञ्** ।१।४।१००। लिटो मिपोऽञ् वा भवति ॥ शेष मागवत् । पपाच पेचतु पेचु । पपक्थ पेचिथ पेचथु पेच । पपाच पपच पेचिव पेचिम ॥ पेचे पेचाते पेचिरे । पेचिषे पेचाथे पेचिध्वे । पेचे पेचिवहे पेचिमहे ॥

**१२११ लिटि वा** ।४।२।१२०। अदो लिटि घस्लृ वा भवति ॥ ऌदित् द्वि ङुगादि ।

**१२१२ गमहनजनखनघसोऽनङ्यचि लुक् क्ङिति** ।४।१।२२०। गमादीनामुपान्त्यस्याच क्ङित्यजादौ लुग् भवति नाङि ॥ पत्वचत्वे । जघास जक्षतु जक्षु । जघसिथ जक्षथु जक्ष । जघास जघस जक्षिव जक्षिम ॥ पक्षे "लिट्याद्यादेरत" इत्यात् । आद आदतु आदु । आदिथ आदथु आद । आद आदिव आदिम ॥ प्रत्ययेऽसुधीण इति यञ् । वेट् जेरिति धस्य वा ढ । शिश्ये शिश्याते शिश्यिरे । शिश्यिषे शिश्याथे शिश्यिध्वे शिश्यिन्वे । शिश्ये शिश्यिवहे शिश्यिमहे ॥ नुवो वचि द्वि ॥

**१२१३ इग्यञ साचोऽर्याज्यम्** ।४।१।१०८। आ ज्यो इत्यतो

---

च्यते ॥ द्वयाहलोरिति किं? आनतु । हलोरिति द्व द्वनिद्देशादिह न भवति ततक्षतु । अत इति किं? दिदेवतु ॥

१ गम्लृ गतौ । हन हिंसागत्यो जनैङ् प्रादुर्भावे । खनूञ् अवधारणे । घस्लृ अदने । अचीति किं? गम्यते । इहाचात्युत्तरत्रानुवृत्त्यर्थ । क्ङितीति किं? गमन हनन । अनङीति किं? अगमत् । अघसत् । गोहोऽचास्ति अचीत्यनुवर्तते अग्मि पुनग्र हण उत्तरत्रानुवृत्त्यर्थम् ॥

वक्ष्यमाणस्य धातोर्लिटि द्विर्भावे पूर्वस्य साचो यत्र इम्भवति न रेफयकारप-रस्य ॥ अपिति इत्यादीतांक् दीर्घ । उवाच ऊचतु ऊचु । उवचिथ उवक्थ ऊचथु ऊच । उवाच उवच ऊचिव ऊचिम ॥ ऊचे ऊचाते ऊचिरे इत्यादि ॥ पित्यङ्वौ णित्यात् क्रित्युव् थे येद् वस्मसोरिट् । जुहार जुहुवतु जुहुवु । जुहविथ जुहोथ जुहुवथु जुहुव । जुहाव जुहव जुहुविव जुहुविम ॥

१२१४ भीह्रीभृहो' श्लुवत् ।१।४।८५। भ्यादिभ्य परस्य लिट आम् वा भवति स च श्लुवत् ॥ तस्य चानन्तर लिङन्ता कृभ्वस्तय प्रयुज्यन्त एव ॥ अतो द्वित्वादि । विदात् किदिति नियमादाम्येङ्वौ ॥

१२१५ न ।१।४।४८। आम परात् कृञो लस्तङ न भवति ॥ शेष मागवत् । जुहवाचकार जुहवाचक्रतु जुहवाचक्रु । जुहवाचकर्थ जुहवाच-क्रथु जुहवाचक्र । जुहवाचकार जुहवाचकर जुहवाचकृव जुहवाचकृम ॥

१२१६ इटि चातो लुक् ।४।२।८४। आदन्तस्य धातोरिड्यजादौ च क्ङिति स्यश्लि प्रत्यये लुग् भवति ॥ जहे जहाते जहिरे इत्यादि ॥

१२१७ णमेरौशात ।१।४।९९। आतो लिटो णश्मिपोरौश् भवति ॥ श इत् ऐन् । दधौ दधतु दधु । दधिथ दधाथ दधथु दध । दधौ दधिव दधिम ॥ दधे दधाते दधिरे इत्यादि ॥ द्वित्वादौ कृते एङ् । दिदेव दिदिवतु दिदिवु । दिदेविथ दिदिवथु दिदिव । दिदेव, दिदिविव दिदिविम ॥ सुषुवे सुषुवाते सुषुविरे । सुषुविषे सुषुवाथे सुषुविढ्वे सुषुवि-ध्वे । सुषुवे सुषुविवहे सुषुविमहे ॥ त्रप्फलीत्यत एत् । नेहतु नेहु । नेहिथ ननद्ध नेहथु नेह । ननाह ननह नेहिव नेहि । नेहे नेहाते नेहिरे इत्यादि॥ सुषाव सुषुवतु सुषुवु । सुषविथ सुषोथ ॥दि॥

१२१८ नङ् चाश्नुदाद्यनेकहल ।४।१।१०६। ऋदा देरनेकहलश्च धातोर्लिटि द्विर्भावे पूर्वस्यात आङ्भवति नङ् चास्य नि तौ । आनशे आनशाते आनशिरे । आनशिषे आनशाथे ॥

१२१९ चेर्वा ।४।१।७३। चिनोते [illegible] ॥११९५ कर्वा

१२८१ यङ्तुरुस्तोर्बहुलम् ।४।२।२१। यङन्तात्तुरुस्तुभ्यश्च परस्याङ्कितो हल अर्लेर्ले ईट् बहुल भवति ॥ एइवौ । पक्षे एइ । स्युक्ति-जक्षेति षोऽत् । उत् । बोभोति बोभवीति बोभूत बोभुवति । बोभोषि । बोभवीषि बोभूथ बोभूथ । बोभोमि बोभवीमि बोभूव बोभूम ॥ लङ् । अबोभोत् अबोभवीत् अबोभूता । झेर्जुस एइवौ अबोभवु । अबोभो अबोभवी अबोभूतम् अबोभूत । अबोभवम् अबोभूव अबोभूम ॥ लेटि हितातोर्गपित्त्वादेडाटौ न भवत । बोभोतु बोभवीतु बोभूताद्वा बोभूता बोभुवतु । बोभूहि बोभूताद्वा बोभूत बोभूत । बोभवानि बोभवाव बोभवाम ॥ लेङि बोभूयात् बोभूयाता बोभूयुरित्यादि । भावकर्मणो बोभूयते अनुबोभूयते इत्यादि । लेङि बोभूयात् बोभूयास्ता बोभूयासु । लिटि नेत्याम परास्कृत्वो हस्तङ् न भवति बोभवाञ्चकार । लुङि सेरिटि स्यस्तेरसोऽल ईट् ईटीट इति सेर्लुक् । सावारेच आत् झेर्जुस् । अबोभावीत् अबोभाविष्टाम् अबोभाविषु । लुटि बोभविता । लाङि अबोभविष्यत् । लृटि बोभविष्यति । कर्मभावे जिडादि च । बोभाविषीष्ट अनुबोभाविषीष्ट अनुबोभविषीष्ट इत्यादि । पापचीति पापक्ति । जोहवीति जोहोति ॥

१२८२ व्यक्तेर्नाचि स्यलौ ।४।१।१९। द्विरुक्तस्य हलन्तस्य धातोरिक अजादौ लिवर्जितलादेशे परे एदरौ न भवत ॥ ईड्भावे एडि वलि वलुक् । देदिवीति देदेति । सोषवीति सोषोति सोषुत । नानहीति नानद्धि । चेत्रयीति चेक्रेति ॥

१२८३ रंग्रुरिम् च ऋचि ।४।१।९३। यङ इलुचि ऋत्वतो धातोर्द्विर्भावे पूर्वस्य रम्रुरिम्रीमो भवन्ति ॥ अमावितौ । वर्वरीति । वरिवरीति । वरीवरीति वर्वर्ति । वरिवर्ति वरीवर्ति । जर्गृहीति जरिगृहीति

१ रीम् ऋत्वतामित्यविकृत्य । चकारो रीमबाधनाथ । ऋत्वतामिति किं? मोमोर्ति वृतावर्ति । वृतरणक्वनयो । रमोऽकार उच्चारणार्थ ॥ जर्गृहीतीरयत्र यङ इलुच्यपि इलुचीनेरिति वचनात् वारिवर्चीत्यादिना यग इव् भवति ॥

जरीगृहीति । अनीटि । ह इति ढ । अध इति तस्य ध । ष्टुत्व । ढे ढलुक् जर्गाढि जरिगाढि जरीगाढि । तोतोत्ति तोतुदीति । मर्मर्ति मरिमर्ति मरीमर्ति मर्मरीति मरिमरीति मरीमरीति । तन्तनीति तन्तन्ति । तिबादिग्रहणनिर्दिष्टेषु यङ्लुचि न भवन्तीति वचनात् हन्मन्यमिति नलुग् न भवति

**१२८४ क्विजलि क्षित्यनुनासिके** ।१।४।१३६। क्वौ जलि च क्ङिति प्रत्यये परे योऽनुनासिकस्तत पूर्वस्य धातोरचो दीर्घो भवति ॥ तन्तान्त तन्तनति । मम्मनीति मम्मन्ति । चर्कर्ति चरिकर्ति चरीकर्ति चर्करीति चरिकरीति चरीकरीति । रोरोद्धि रोरुधीति । योयोक्ति योयुजीति । योयोक्ति योयुजीति । एवमन्येऽपि धातवो नेतव्या ॥

॥ इति यङ्प्रकरणम् ॥

भवति कश्चित्तमन्य प्रयुङ्क्ते । इति विगृह्य ॥

**१२८५ प्रयुज्याप्याण्णिज्वा**[1] ।४।१।१५। प्रयुज्याप्यार्थाद्धातो प्रयुज्यर्थे णिज्वा भवति ॥ णजावितौ । एडवात भावीत्यतो लडादय । भावयति भावयत भावयन्ति इत्यादि ॥

---

१ प्रयुजे प्रपूर्वस्य युजिधातो आप्य कम प्रयुज्याप्य तस्मात् । प्रयोग प्रकृतिकरण प्रेरण । तत् प्रेषणाध्येषणानिमित्तभावाख्यानाभिनयज्ञानप्राप्तिभेदैरनेकधा भवति । देवदत्तस्य कटस्य करण प्रयुङ्क्ते देवदत्त कट कारयति । देवदत्तस्यासन प्रयुङ्क्ते देवदत्तमासयति । देवदत्तनादनस्य पाक प्रयुङ्क्ते देवदत्तेनोदन पाचयति । अत्र प्रेषणेनाध्येषणेन वा प्रयोग ॥ कारीषोऽग्निरध्यापयति अत्र निमित्तभावेन ॥ राजागमन प्रयुङ्क्ते राजानमागमयति । मृगाब्रमयति अत्र आख्यानेन । अत्रोऽयेन हि बुद्धिस्थागमनादि प्रयुक्त प्रतीयत ॥ कसस्य वध प्रयुङ्क्ते कस घातयति । बलिं बन्धयति आमनिक अत्राभिनयन ॥ पुष्येण प्रयाजयति । मघाभिर्योजयति गणक अत्र विज्ञानेन ॥ उज्जयिन्या प्रदोषे प्रस्थित माहिष्मत्या सूर्योद्गमन प्रयुङ्क्ते माहिष्मत्या सूर्यमुद्गमयति अत्र प्राप्त्या ॥ प्रयुजेरिति किं? पाक विहन्ति ॥ आप्यादिति किं? पाकेन प्रयुङ्क्ते । प्रपूर्वयुजरर्थे प्रयुगिति शब्दाभिधाने चाभेदोपचारेणार्थो विज्ञायत ॥ वचनिवाक्यार्थं वचनम् ॥

**१२८६ वेद्पादमायमायस्परिमुहरुचिनृतिवदवसयचरय यथेङ्मृहसुधयुधनशजन' फलेशे पदाद्गते तु वा** ।१।४।६५। धेडादिभ्यो वस्यन्तेभ्य चल्यर्थादिवर्जितेभ्यश्च धातुभ्यो णिजो र फलेशे कर्तरि तङो भवति पदान्तरात्फलेशत्वे ज्ञाते तु वा ॥ भाययते । कर्मादौ यकि णिलुक् भाय्यते । एधयति एधयते । पाचयति । आदयति । शाययति । वाचयति । हावयति ॥

**१२८७ ह्रीब्लीरीक्नूयीक्ष्माय्यर्त्याता पक्** ।४।१।२०। ह्रियादेरा‌‌‌‌‌‌‌‌‌‌‌तस्य च णो पक् भवति ॥ अकावितौ क्ङित । ह्रापयति दापयति । देवयति । सावयति । नाहयति । आशयति ॥

**१२८८ चिस्फुरोर्वा** ।४।१।१९३। चिस्फुरोरेच णो आद्वा भवति ॥ पक् । चापयति । चाययति ॥

**१२८९ क्रीङ्जे** ।४।१।१८९। क्रीङ्जीना णौ आद्भवति ॥ पक् । क्रापयति । वारयति । ग्राहयति । नोदयति । मारयति । मोचयति । तानयति । मानयति । कारयति । रोधयति । भोजयति । योजयति । णिजि णेर्लुक् । चोरयति । छादयति । लक्षयति । योजयति । अर्चयति । वारयति । एवमन्येऽपि नेया ॥

॥ इति णिज्प्रकरणम् ॥

---

१ आग युक्ता यम उपरम । यसु प्रयत्ने । परि युक्त ॥ अचल्यद्यर्थवर्जितेभ्य चलनाथमक्षणाधधातुवर्जितेभ्य । तथा इङ् अध्ययने इत्यादिवर्जितेभ्य ॥ फलश क्रियाया फलस्वामिनि कर्तरि तङो भवति। पदान्तरात्तु प्रतीत फलेशत्वे वा भवन्ति ॥ स च फलेशो यत्फल क्रियाया पाकादरदनादि प्रधान यदर्थ स क्रियारम्भ तस्यगा चरय तत्फल यस्तत्फलभोक्तृत्वनाध्यवसीयते ॥

ह्री लज्जायां । ब्ली वरणे । रीङ् विशरणे । री रोषण च । क्नूयैङ् क्लिशब्द । क्ष्मायैङ् विधूनने ऋ गतौ । आतामिति आकारानुबन्धना धातूनां ग्रहणार्थं बहुवचन ॥ सानुबन्धपरिभाषा इह नाश्रीयते इति री इति रारीङोरुभयोग्रहणम् । तथा ऋ गतिप्रापणयो ऋ गतौ इत्युभयोर्ग्रहणमविकरणनिर्देशात् । तिप् निर्देशो यङ्लुब्निवृत्त्यर्थ । लक्षणप्रतिपदोक्तपरिभाषा इह नाश्रीयत ॥

